॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१५३

॥ श्रीः ॥

# वास्तुपूजापद्धतिः

तथा

## गृहे गृध्रादिपतनशान्तिपद्धतिः

## गृहप्रवेशपद्धतिश्च



प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस

बनारस सिटी।

॥ श्रीः ॥

हरिदास–संस्कृत–ग्रन्थमाला

१५३

# वास्तुपूजापद्धतिः

## गृहप्रवेशपद्धति-गृध्रादिपतनशान्तिपद्धति-सहिता

'मिथिला' देशस्थ 'दरभङ्गा'-मण्डलान्तर्गत 'जरिसो' ग्रामवासि-काशीस्थ-
"श्री राम साधु संस्कृत महाविद्यालय" त्रिस्कन्ध-ज्योतिष-साहित्य-
शास्त्रद्वयप्रधानाध्यापक-ज्योतिषाचार्य-पोष्टाचार्य-साहित्या-
चार्यादिपदवीक-प्राप्त 'रीपन्' स्वर्णपदक-पण्डित-
श्री अच्युतानन्दझा शर्मणा मैथिलेन
सम्पादिता तेनैव संशोधिता च ।



प्रकाशकः—
चौखम्बा-संस्कृत-सीरिज़ आफ़िस,
विद्याविलास प्रेस, बनारस सिटी

सं० २००७ ] मूल्यं ।≈) [ सन् १९५०

# भूमिका

वन्दामहे गलितसुन्दरकेशपाशां
चन्द्रार्धमौलिरुचिरां नवमेघवर्णाम् ।
आशाम्बरां शवविभूषणभूषिताङ्गीं
श्रीकालिकामखिलदैत्यकदम्बहन्त्रीम् ॥

आप लोग जानते होंगे कि गृहस्थों को गृहसम्बन्ध लेकर अनेक पद्धतियों का पद पद में प्रयोजन होता है। उन में ये तीन पद्धतियाँ अत्यन्त प्रयोजनीय हैं, जिन का राजा से लेकर रङ्क तक सबों को प्रयोजन होता है।

जैसे घर बनाने के पहले अभीष्ट वास्तु भूमि पर वास्तुपुरुष नामक देवता के साथ अनेक देवताओं का पूजन जिस से किया जाता है, उस का नाम "वास्तु-पूजापद्धति" है।

घर बनाने के बाद अच्छे मुहूर्त में सपरिवार घर में प्रवेश कर ६४ या ८१ पद के चक्र में और वास्तुपुरुष के साथ में अनेक देवताओं का पूजन जिस से किया जाता है, उस का नाम "गृहप्रवेशपद्धति" है।

गृहप्रवेश करने के बाद गृध्र, चिल्ल, सियार, सर्प इत्यादि जन्तुजन्य अनेक तरह के उपद्रव होते रहते हैं, जिन की विधिपूर्वक शान्ति नहीं होने से वहां पर रहने वालों को अनेक तरह के अनिष्ट होते हैं। जिन अनिष्टों के कारण गृह-स्वामी अनेक प्रकार के विपत्तियों में फँस जाता है, अतः इन सब उपद्रवों के शान्ति के लिये मैंने अन्त में 'गृहे गृध्रादिपतनशान्तिपद्धति" दिया है।

अनेक परिश्रम से लोकोपकारार्थ इन तीनों पद्धतियों को लिखकर प्रकाशनार्थ बाबू "श्री जयकृष्णदासजी गुप्त" को समर्पण करता हूँ।

त्रुटि संशोधनार्थ सब सज्जनों से प्रार्थना करता हूँ।

गच्छतस्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ इति।

ई० १९४२
काशी

श्रीमतां कृपाभिलाषी–
**श्री अच्युतानन्दझा, जरिसो।**

॥ श्रीकालिकायै नमः ॥

# वास्तुपूजापद्धतिः

मङ्गलाचरणम्—

नत्वा श्रीकालिकां देवीं गुरुञ्च ज्ञानकारणम् ।
मातापित्रोः पदाम्भोजं ब्रुवेऽहं पद्धतित्रयम् ॥

अथ प्रकाशितपुस्तकोक्तविधिना वास्तुपूजनज्ञानं सर्वेषां सम्यङ् न भवतीत्यतो मया संक्षेपेण सर्वसुबोधाय वास्तुपूजनविधिर्विलिख्यते ।

वास्तुपूजनविधिरुक्तः स्मृतौ—

गृहादिकरणे यत्र नार्चिता वास्तुदेवताः ।
तत्र शून्यं भवेत्सर्वं रक्षोविघ्नादिभिर्हरेत् ॥
तस्माद्वास्त्वर्चनं कार्यं सम्यक् सम्पदमीप्सुभिः ।
वित्तशाठ्यन्न कुर्वीत यदीच्छेच्छुभमात्मनः ॥

इत्यादि-स्मृत्युक्तवचनाद् गृहारम्भदिने गृहप्रवेशदिवसे च वास्तुपुरुषादिदेवार्चनमवश्यं कुर्यात् ।

"पाषाणेष्टादिगेहन्तु निन्द्यमासे न कारयेत् ।
तृणकाष्ठगृहारम्भे मासदोषो न विद्यते" ॥

इत्यादिवचनात् तृणकाष्ठवस्त्रादिगृहारम्भे मासादिसमयनियमो नास्ति । परञ्च तथापि चिरदिवसस्थायित्वेन शुभदिनं प्रतीक्षेदेव । तत्र प्रसङ्गात्सर्वेषां सुबोधाय शुभसमयो विलिख्यते ।

वैशाखश्रावणकार्तिकाग्रहणफाल्गुनमासेषु शुक्लपक्षे । रिक्ता(४।९।१४)मावस्याष्टमीवर्जिततिथौ चन्द्रबुधगुरुशुक्रशनिवारेषु रोहिणीमृगशिरापुनर्वसुपुष्योत्तरफाल्गुनीहस्तचित्रास्वात्यनुराधाज्येष्ठामूलोत्तराषाढश्रवणाधनिष्ठाशतभिषोत्तरभाद्ररेवतीनक्षत्रेषु गृहारम्भं कुर्यात् ।

अथ कर्तव्यवास्तुभूमौ सर्पाकारं वास्तुपुरुषं परिकल्प्य तस्य नाभौ वास्तुखातं खनेत् । स च वास्तुसर्पः भाद्रादिमासत्रये पूर्वशिराः स्वपिति, मार्गादित्रये दक्षिणशिराः, फाल्गुनादित्रये पश्चिमशिराः, ज्येष्ठादित्रये उत्तरशिराः स्वपिति । सर्वदा वामपार्श्वेनैवायं शेत इति ।

तत्र शिरोदेशादारभ्य भागद्वयं त्याज्यं, पुच्छदेशादारभ्यैको भागस्त्याज्यः। अवशिष्टभागं नाभिं जानीयात् । तत्र दक्षिणभागे वास्तुखातं हस्तमात्रं विधाय तच्च जलेन पूरयेत् । तस्मिन् गर्तजले क्वचित्तत्समीपे घटे वा शालग्रामे वा देवताः पूजयेत् ।

तथाहि—

कृतनित्यक्रियो यजमान आसने पूर्वाभिमुख उपविश्य पूजोपकरणान्यासाद्य कुशत्रयजलान्यादाय सङ्कल्पं कुर्य्यात् ।

ओं अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रस्यामुकशर्म्मणः—'भूतलस्थानाधिकरणकनिर्विघ्नपूर्वकचिरकालवाससुखसौमनस्यनैरुज्यदीर्घायुष्ट्वबलपुष्टिकामो वास्तुकर्म तदङ्गतया कलशस्थापनपूर्वकगणेशादिपञ्चदेवतानवग्रहदशदिक्पालाष्टवसुकूरक्षेत्रपालषोडशमातृकानन्तपृथ्वीकूर्मनागाष्टकसहितवास्तुपुरुषपूजनमहं करिष्ये ( परार्थं करिष्यामीति ) सङ्कल्प्य ।

ततः पूजनम्-अक्षतमादाय-ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवता इहागच्छत इह तिष्ठत ( दिवसे वास्तुपूजनसमयश्चेत्तदा-सूर्यादिपञ्चदेवता इहागच्छत इह तिष्ठत इत्यावाह्य पूजनम् )। पाद्यमादाय-एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। चन्दनमादाय—इदमनुलेपनं ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। रक्तचन्दनमादाय—इदं रक्तचन्दनं ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। अक्षतमादाय-इदमक्षतं ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। पुष्पाण्यादाय-एतानि पुष्पाणि ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। दूर्व्वादलान्यादाय-एतानि दूर्व्वादलानि ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। बिल्वपत्राण्यादाय-एतानि बिल्वपत्राणि ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। माल्यमादाय—इदं माल्यं ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। इदमाचमनीयं ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताभ्यो नमः।

तिलानादाय-ओं भगवन् विष्णो इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भगवते श्रीविष्णवे नमः। एवं चन्दनादिभिः पूजयेत् । ततो घटं संस्थाप्य जलेन परिपूर्य्य आम्रपल्लवं तदुपरि दद्यात् ।

ततो नवग्रहादिदेवानां पूजनं कार्यम्—अक्षतं गृहीत्वा, ओं साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहा इहागच्छत इह तिष्ठत। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। इदमनुलेपनं ओं साधिदैवतसप्रत्यधिदैवतविनायकादि-

पञ्चकसहितनवग्रहेभ्यो नमः। इदमक्षतं ओं भूर्भुवः स्वः-साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। एतानि पुष्पाणि ओं भूर्भुवः स्वः-साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। एतानि दूर्वादलानि ओं भूर्भुवः स्वः-साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। एतानि बिल्वपत्राणि ओं भूर्भुवः स्वः-साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। इदं माल्यं ओं भूर्भुवः स्वः-साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्वः साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्यो नमः।

ततोऽक्षतं गृहीत्वा ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पाला इहागच्छत इह तिष्ठत। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः इन्द्रादिदशदिक्पालेभ्यो नमः। इदमनुलेपनं ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। इदमक्षतं ओं भूर्भुव स्वः इन्द्रादिदशदिक्पालेभ्यो नमः। एतानि पुष्पाणि ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। एतानि दूर्वादलानि ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। एतानि बिल्वपत्राणि ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। इदं माल्यं ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। इदमाचमनीयं ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्वः-इन्द्रादिदशदिक्पालेभ्यो नमः।

ततोऽक्षतमादाय—ओं भूर्भुवः स्वः अष्टवसव इहागच्छत इह तिष्ठत। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरष्टवसुभ्यो नमः।

इदमनुलेपनं ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। इदमक्षतं ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। इदं पुष्पं ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। एतानि दूर्वादलानि ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। इदं बिल्वपत्रं ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। इदं माल्यं ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। इदमाचनीयं ओं भूर्भुवः स्वरष्टवसुभ्यो नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्वरष्टवसुभ्यो नमः।

ततोऽक्षतमादाय—ओं भूर्भुवः स्वः क्षेत्रपाल इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनोयानि ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। इदमनुलेपनं ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। इदमक्षतं ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। इदं पुष्पं ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। एतानि दूर्वादलानि ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। इदं बिल्वपत्रं ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। इदं माल्यं ओंभूर्भुव स्वः क्षेत्रपालाय नमः। एतानि गन्धपुष्पधूपदीपताम्बूलयथाभागनैवेद्यानि ओं भूर्भुवः

स्वः क्षेत्रपालाय नमः। इदमाचमनीयं ओं भूर्भुवः स्वः क्षेत्रपालाय नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्वः क्षेत्रपालाय नमः।

ततोऽक्षतमादाय—ओं भूर्भुवः स्वः क्रूरभूतानि इहागच्छत इह तिष्ठत। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। इदमनुलेपनं ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। इदमक्षतं ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। इदं पुष्पं ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। एतानि दूर्वादलानि ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। इदं बिल्वपत्रं ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। इदं माल्यं ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। एतानि गन्धपुष्पधूपदीपताम्बूलयथाभागनैवेद्यानि ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। इदमाचमनीयं ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्वः क्रूरभूतेभ्यो नमः।

ततः क्रमेण (१) गौरी (२) पद्मा (३) शची (४) मेधा (५) सावित्री (६) विजया (७) जया (८) देवसेना (९) स्वधा (१०) स्वाहा (११) मातरः (१२) लोकमातरः (१३) हृष्टिः (१४) पुष्टिः (१५) तुष्टिः (१६) आत्मकुलदेवता इति षोडश मातृकाः पूजनीयाः।

तद्यथा, अक्षतमादाय—ओं भूर्भुवः स्वर्गौरि इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्गौर्य्यै नमः। एवमनुलेपनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पद्मायै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः शचि इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः शच्यै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्मेधे इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्मेधायै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः सावित्रि इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः सावित्र्यै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्विजये इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्विजायै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्जये इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्जयायै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्देवसेने इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्देवसेनायै नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः स्वधे इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-

पुनराचमनीयानि ओं भूर्भुवः स्वः स्वधायै नमः । एवमनुलेपनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वः स्वाहे इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः स्वाहायै नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्मातर इहागच्छत इह तिष्ठत । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्मातृभ्यो नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्लोकमातर इहागच्छत इह तिष्ठत । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्लोकमातृभ्यो नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्हृष्टे इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्हृष्टयै नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वः पुष्टे इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पुष्टयै नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वस्तुष्टे इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वस्तुष्टयै नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वरात्मकुलदेवते इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरात्मकुलदेवतायै नमः । एवं चन्दनादिभिः पूजयेत् ।

ततः पूर्णघटे लक्ष्मीपूजनम्—

ओं भूर्भुवः स्वर्लक्ष्मि इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्लक्ष्म्यै नमः । एवं चन्दनादिभिः सम्पूज्य ।

ओं हिरण्यवर्णा—इत्यादिश्रीसूक्तेन पुष्पाञ्जलिं दद्यात् ।

(१) ततो धरित्रीपूजनम्—ओं भूर्भुवः स्वर्धरित्रि इहागच्छ इह तिष्ठ ।

ओं हिरण्यगर्भे वसुधे शेषस्योपरि शायिनि ।
वसाम्यहं तव पृष्ठे गृहाणार्घं धरित्रि मे ॥

एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदमनुलेपनं ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदं रक्तानुलेपनं ओं भूर्भुवः स्वर्धरित्र्यै नमः । एष सिन्दूरः ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदमक्षतं ओं भूर्भुवः स्वर्धरित्र्यै नमः । एतानि पुष्पाणि ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदं माल्यं ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदं वस्त्रं ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदं दूर्वादलं ओं भूर्भुवः स्वर्धरित्र्यै नमः । इदं बिल्वपत्रं ओं भूर्भुवः स्वर्धरित्र्यै नमः । एतानि गन्धपुष्पधूप-

---

(१) पृथ्वीनवग्रहधरामरशक्रपूर्वाः नागाः पराशरप्रजापतिचूतपर्णैः ।
वास्तोष्पतिर्दधियुताक्षतधूपगन्धैः पूज्या धरामरगणाः विधिवद्गणेशः ॥

दीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्वर्धरित्र्यै नमः। इदमाचमनीयं ओं भूर्भुवः स्वर्धरित्र्यै नमः।

ततः पुष्पाञ्जलिमादाय—

ओं यथाचलो गिरिर्मेरुरावासमचलं गुरु। आरोपितं गृहस्तम्भं तथा स्वमचला भव॥
शुभे च लोचने देवि चतुरस्रे महीतले। शुभगे सूत्रजे देवि गृहे काश्यपि रमताद्॥
अव्यङ्गे चाक्षते पूर्णे मूले वहुरसः इधे। तुभ्यं मया कृता पूजा समृद्धिं गृहिणः कुरु॥

एष पुष्पाञ्जलिः ओं भूर्भुवः स्वर्धरित्र्यै नमः।

ओं भूर्भुवः स्वः कूर्म इहागच्छ इह तिष्ठ।

ओं सर्वलक्षणसम्पन्न सर्वेश कमलाधिप।
स्थानं देहि गृहं कर्तुं विष्णुरूप नमोऽस्तु ते॥

एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः कूर्माय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरनन्त इहागच्छ इह तिष्ठ।

ओं हिमकुन्दप्रतीकाश नागानन्त महाफणिन्।
स्थानं देहि गृहं कर्तुं गृहाणार्घं नमोऽस्तु ते॥

एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरनन्ताय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्वासुके इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वासुकये नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वस्तक्षक इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वस्तक्षकाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः कुलिक इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः कुलिकाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः कर्कोटक इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः कर्कोटकाय नमः। एवं चन्दादिभिः पूजयेत्।

ओं भूर्भुवः स्वः पद्म इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पद्माय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः शंखचूड इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः शंखचूडाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्महापद्म इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्महापद्माय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्धनञ्जय इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-

पुनराचमनीयानि ओं भूर्भुवः स्वर्धनञ्जयाय नमः। एवं चन्दनादिभिः पूजयेत्।

अथ गर्तजले घंटे शालग्रामे वा वास्तुपुरुषं (१) पूजयेत्। तद्यथा—

ओं वास्तोष्पतिम्महादेवं सर्वसिद्धिविधायकम्।
शान्तिकर्त्तारमीशानं तं वास्तुं प्रणतोऽस्म्यहम्॥
आवाहयामि देवेशं वास्तुदेवं महाबलम्।
देवदेवं गणाध्यक्षं पातालतलवासिनम्॥

ओं भूर्भुवः स्वः वास्तोष्पते इहागच्छ इह तिष्ठ। इदमासनं ओं भूर्भुवः स्ववास्तोष्पतये नमः। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वास्तोष्पतये नमः।

ततः सपञ्चहिरण्यार्घमादाय—

ओं वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः।
यत्त्वेमहे प्रतितन्नोजुषस्व शन्नो भव द्विपदेशञ्चतुष्पदे स्वाहा॥

एषोऽर्घः ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदमाचमनीयं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदं स्नानीयं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इद पुनराचमनीयं ओंभूर्भुवः स्वर्वास्तोष्पतये नमः। इदं शुक्लवासोयुगं बृहस्पतिदैवतं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इमे यज्ञोपवीते बृहस्पतिदैवते ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदं भूषणं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदमनुलेपनं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदं रक्तानुलेपनं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। एतानि पुष्पाणि ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदं माल्यं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदं दूर्वादलं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदं विल्वपत्रं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। एष धूपः ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। इदमाचमनीयं ओं भूर्भुवः स्वर्वास्तोष्पतये नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्वर्वास्तोष्पतये नमः।

ततः—ओं सर्वज्ञानक्रियाव्यक्तकमलासनाय योगपीठाय नमः। इति मन्त्रेण मध्ये योगपीठं सम्पूज्य, तत्र—

ओं ब्रह्मन्निहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं ब्रह्मणे नमः। एवं चन्दनादिभिः पूजयेत्।

---

(१) वास्तुपुरुषस्वरूपमाह बृहस्पतिः—

पुराकृतयुगे ह्यासीन्महद्भूतं समुत्थितम्। व्याप्यमानं शरीरेण सकलं भुवनं ततः।
तद्दृष्ट्वा विस्मयं देवा गताः सेन्द्रा भयावृताः।
ततस्तैः क्रोधसन्तप्तैर्गृहीत्वा तमथासुरम्॥
विनिक्षिप्तमधो वक्त्रं स्थितास्तत्रैव ते सुराः। तमेव वास्तुपुरुषं ब्रह्मा समभिकल्पितम्॥

ततस्तम्भरोपणम्—

ओं यथाचलोगुरुर्मेरुरावासमचलं कृतम्। ममारोपितगृहस्तम्भं तथात्वमचलं कुरु॥

इत्यनेन गर्ते स्तम्भमारोपयेत्।

ततः पूजितदेवताभ्यः पूर्ववदर्घं दत्वा सदधिमाषभक्तबलिन्दद्यात्। सुपक्वघृतदधिमाषभक्तशरावस्थितमादाय—ओं गणपत्यादिपञ्चदेवताभ्यः एष सदधिघृतमाषभक्तबलिर्नमः।

ओं भगवते श्रीविष्णवे एष सदधिघृतमाषभक्तबलिर्नमः।

एवं साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहेभ्य एष सदधिघृतमाषभक्तबलिर्नमः।

ततः—ओं अष्टवसुभ्यः एष सदधिघृतमाषभक्तबलिर्नमः।

ततः—ओं क्षेत्रपाल नमस्तुभ्यं सर्वकामफलप्रद।
ममात्र विघ्नशान्त्यर्थं गृहाण त्वमिमं बलिम्॥

ओं क्षेत्रपालाय एष सदधिघृतमाषभक्तबलिर्नमः।

ततः—ओं क्रूरभूत नमस्तुभ्य सर्वकामफलप्रद।
ममात्र विघ्नशान्त्यर्थं गृहाण त्वमिमं बलिम्॥

ओं क्रूरभूताय एष सदधिघृतमाषभक्तबलिर्नमः।

एवं गौर्य्यादिषोडशमातृभ्यो लक्ष्म्यै च प्रत्येकं माषभक्तबलिन्दद्यात्। एवं धरित्र्यै, कूर्माय, अनन्ताय च बलिन्दद्यात्।

ततः पूर्व—

ओं गजवाहनाय वज्रहस्ताय तेजोऽधिपतये इन्द्राय एष सदधिघृतमाषभक्तबलिर्नमः।

ततोऽग्निकोणे—

ओं छागवाहनाय शक्तिहस्ताय वैश्वानरमूर्तये एष सदधिघृतमाषभक्तबलिर्नमः।

ततो दक्षिणे—

ओं दण्डहस्ताय महिषवाहनाय यममूर्तये एष सदधिघृतमाषभक्तबलिर्नमः।

ततो नैर्ऋत्याम्—

ओं गजवाहनाय खड्गहस्ताय निर्ऋतिमूर्तये एष सदधिघृतमाषभक्तबलिर्नमः।

ततः पश्चिमे—

ओं गरुडवाहनाय शङ्खचक्रगदापद्महस्ताय वरुणाय एष सदधिघृतमाषभक्तबलिर्नमः।

ततो वायव्ये—

ओं क्षेत्रपालाय मृगवाहनाय वायवे एष सदधिघृतमाषभक्तबलिर्नमः।

तत उत्तरे—

ओं कुबेराय गदाहस्ताय नरवाहनाय एष सदधिघृतमाषभक्तबलिर्नमः।

ततः ईशाने—

ओं वृषवाहनाय त्रिशूलशक्तिहस्ताय त्रिनेत्राय एष सदधिघृतमाषभक्तबलिर्नमः ।

मध्यगृहे—

ओं पातालदेवाय सहस्रफणाय द्विसहस्रलोचनाय वासुकिनागाय शक्तिहस्ताय सर्वनागाधिपतये एष सदधिघृतमाषभक्तबलिर्नमः ।

ओं अग्रभागं प्रतीचस्व पूजां चैव बलिस्मम ।
नमस्ते देवदेवेश मम स्वस्तिकरो भव ॥

भूर्भुवः वास्तो सपरिवार इमं समोपनीतं बलिं गृहाण मम यज्ञमच्छिद्रं कुरु सर्वभूतेभ्यो ओं रक्ष रक्ष एष सदधिघृतमाषभक्तबलिः ओं वास्तोष्पतये नमः ।
अथवा सर्वत्र एव सघृतपायसबलिर्देयः । यद्यपि देवीपुराणादौ विशेषबलिर्लिखितः । तत्र तदलम्भवात् स च बलिः शिष्टैर्न गृहीतः । किन्तु मत्स्यपुराणोक्तपायसबलिरेव दीयते । तथा च—

पायसं वापि दातव्यं स्वनाम्ना सर्वतः क्रमात् । नमस्कारेण मन्त्रेण प्रणवाद्येन सर्वतः ॥
ओं यथा मेरुगिरेः शृङ्गे देवानामालयं सदा । तथा ब्रह्मादिदेवानां गेहे मम स्थिरं भव ॥

इत्यनेन वास्तुपुरुषं प्रार्थयेत् ।

ततो दध्यक्षतदूर्वापल्लवं शेषमन्नादिकं कलशस्थजलञ्च गर्ते निःक्षिप्य गर्तं मृत्तिकया पूरयेत् ।

ततो विसर्जनम्—

ओं भूर्भुवः स्वर्गणपत्यादिपञ्चदेवताः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत ।
ओं भूर्भुवः स्वः साधिदैवतसप्रत्यधिदैवतविनायकादिपञ्चकसहितनवग्रहाः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत ।
ओं भगवन् विष्णो पूजितोऽसि प्रसीद क्षमस्व ।
ओं भूर्भुवः स्वरिन्द्रादिदशदिक्पालाः पूजिताः स्थ क्षमध्वम् ।
ओं ,, स्वरष्टवसवः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत ।
ओं ,, स्वः क्षेत्रपाल पूजितोऽसि प्रसीद क्षमस्व ।
ओं ,, स्वः क्रूरभूतानि पूजितानि स्थ क्षमध्वं स्वस्थानं गच्छत ।
ओं ,, स्वर्गौरि पूजितासि प्रसीद क्षमस्व ।
ओं ,, स्वः पद्मे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं ,, स्वः शचि पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं ,, स्वः मेधे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं ,, स्वः सावित्रि पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं ,, स्वर्विजये पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।

ओं भूर्भुवः स्वर्जये पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वर्देवसेने पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वः स्वधे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वः स्वाहे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वर्मातरः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत ।
ओं „ स्वर्लोकमातरः पूजिताः स्थ क्षमध्वं स्वस्थानं गच्छत ।
ओं „ स्वर्हृष्टे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वः पुष्टे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वस्तुष्टे पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वरात्मकुलदेवते पूजितासि प्रसीद क्षमस्व स्वस्थानं गच्छ ।
ओं „ स्वर्लक्ष्मि मयि रमस्व ।
२—ओं „ स्वर्धरित्रि पूजितासि प्रसीद क्षमस्व ।
ओं „ स्वः कूर्म्म पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वरनन्त पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वर्वासुके पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वस्तक्षक पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वः कुलिक पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वः कर्कोटक पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वः पद्म पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वः शङ्खचूड पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वर्महापद्म पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वर्धनञ्जय पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वर्वास्तोष्पते पूजितोऽसि प्रसीद क्षमस्व ।
ओं „ स्वर्ब्रह्मन् पूजितोऽसि प्रसीद क्षमस्व ।

अथवा लाघवार्थं "ओं यान्तु देवगणाः सर्वे पूजामादाय याज्ञिकीम् । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च" इत्यनेन सर्वानेव पूजितदेवान् विसर्जयेत् ।

ततो दक्षिणादानम् । कुशादिकमादाय—ओं अद्य कृतैतद्वास्तुकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे । इति यथाशक्ति ब्राह्मणाय दक्षिणां दत्वा तेभ्यो भोजयेत् । इति वास्तुपूजापद्धतिः ।

---

## अथ गृहप्रवेशपद्धतिः ।

तत्र कृतनित्यक्रियः सस्त्रीको यजमानः सर्वथा शुभसमये रात्रौ दिवसे वा जलपूर्णकलशसमन्वितान् विप्रान् (१) अग्रे कृत्वा सर्वथा परिष्कृतगृहं प्रविशेत् ।

ततो यजमानः—आसने पूर्वाभिमुख उपविश्य पूजोपकरणान्यासाद्य अक्षतमादाय—ओं भूर्भुवः स्वर्गणपत्यादिपञ्च देवताः इहागच्छत इह तिष्ठत । एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः गणपत्यादिपञ्चदेवताभ्यो नमः । एवं चन्दनादिभिः पूजयेत् ।

ततो यवतिलानादाय—ओं भूर्भुवः स्वर्भगवन् विष्णो इहागच्छ इह तिष्ठ । एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्भगवते श्रीविष्णवे नमः । एवं चन्दनादिभिः पूजयेत् । ततः कुशत्रयतिलजलान्यादाय संकल्पं कुर्यात् ।

ओं अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रस्यामुकशर्म्मणः सपरिवारस्यै-

---

(१) अथ ब्राह्मणमाहात्म्यम्—

ब्राह्मणाः सन्तु शास्तारः पापात्पान्तु समाहिताः ।
वेदानां चैव दातारः पातारः सर्वदेहिनाम् ॥
जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ।
देवानां च ऋषीणां च तृप्त्यर्थं याजकाः स्मृताः ॥
येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् । रक्षन्तु सततं ते मां जपे यज्ञे व्यवस्थिताः ॥
ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥
पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः । सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥
श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा । यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥
अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥
यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ।
वास्तुयागे च मे पूज्याः सन्तु ते नियमान्विताः ॥
अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥
अदुष्टभाषणा सन्तु मा सन्तु परनिन्दकाः । ममापि नियमा ह्येते भवन्तु भवतामपि ॥
ऋत्विजश्च यथापूर्वं शक्रादीनां मखेऽभवन् । यूयं तथा मे भवन्तु ऋत्विजोऽर्हणसत्तमाः ॥
अस्मिन् कर्मणि ये यत्र वृता गुरुमुखादयः । सावधानाः प्रकुर्वन्तु स्वं स्वं कर्म यथोदितम् ॥
अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नेन कर्तव्यं कर्मेदं विधिपूर्वकम् ॥

तद्गृहवास्तुसर्वदोषप्रशमनपूर्वकसर्वदुःखरहितव्याधिभयराहित्यबन्धुजनक्षयाभावपूर्वकैहिकशतवर्षजीविस्वान्तकालिकानेककल्पस्वर्गवासकामो वास्तुपूजनमहं करिष्ये इति सङ्कल्प्य, पञ्चगव्येन वास्तुगृहं परिषेचयेत्। ततः कल्पितमण्डले चतुष्कोणेषु द्वादशाङ्गुलपरिमितखदिरशङ्कुचतुष्टयम्—

ओं विशन्तु ते तले नागा लोकपालाश्च कामगाः ।
अस्मिन् गेहे तु तिष्ठन्तु आयुर्बलकराः सदा ॥

इत्यनेन गृहीत्वा ईशानादिक्रमेण (१) रोपयेत् । तत्र मन्त्राः क्रमेण—

ऐशान्याम्—

ओं रुद्रेभ्यश्चैव सर्वेभ्यो ये चान्ये तत्समाश्रिताः ।
बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ।

एष माषभक्तबलिः प्रथमशंकुदेवतायै नमः ॥

तत आग्नेय्याम्—

ओं अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ।
बलिन्तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ।

एष माषभक्तबलिर्द्वितीयशंकुदेवतायै नमः ।

ततो नैर्ऋत्याम्—

ओं नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ।
बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥

एष माषभक्तबलिस्तृतीयशंकुदेवतायै नमः ।

ततो वायव्याम्—

ओं नमो वै वायुरक्षोभ्यो ये चान्ये तत्समाश्रिताः ।
बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥

एष माषभक्तबलिश्चतुर्थशंकुदेवतायै नमः ।

ततश्चतुष्षष्टिमण्डलार्थं—

ईशानकोणादारभ्य पीठोपरि कुङ्कुमादिना सुवर्णरजतादिशलाकया पश्चादारभ्य प्रागन्ता उदक्संस्था नव रेखाः कुर्यात् । तत्र मन्त्राः क्रमेण—

ओं लक्ष्म्यै नमः (१), ओं यशोवत्यै नमः (२), ओं कान्तायै नमः (३), ओं सुप्रियायै नमः (४), ओं विमलायै नमः (५), ओं शिवायै नमः (६), ओं सुभगायै नमः (७), ओं सुमत्यै नमः (८), ओं इडायै नमः (९), इति ।

ततो दक्षिणारम्भा उदगन्ताः प्राक्संस्थाश्च नव रेखाः कुर्यात् ।

(१) वास्तुमण्डलकोणेषु ईशानादिक्रमेण च । शङ्कूनां रोपणं शस्तं प्रादक्षिण्येन मार्गतः॥

तत्र मन्त्राः क्रमेण—

ओं धन्यायै नमः (१), ओं प्राणायै नमः (२), ओं विशालायै नमः (३), ओं स्थिरायै नमः (४), ओं भद्रायै नमः (५), ओं जयायै नमः (६), ओं निशायै नमः (७), ओं विरजायै नमः (८), ओं विभायै नमः (९), इति।

अथैकाशीतिपदपक्षे तु—पश्चादारभ्य प्रागन्ताः उदक्संस्थाः दश रेखाः कार्याः।

तत्र मन्त्राः क्रमेण—

ओं शान्तायै नमः (१), ओं यशोवत्यै नमः (२), ओं कान्तायै नमः (३), ओं विशालायै नमः (४), ओं प्राणवाहिन्यै नमः (५), ओं सत्यै नमः (६), ओं सुमत्यै नमः (७), ओं नन्दायै नमः (८), ओं सुभद्रायै नमः (९), ओं सुरथायै नमः (१०), इति।

ततो दक्षिणादारभ्य उदगन्ताः प्राक्संस्था दश रेखाः कार्याः।

तत्र मन्त्राः क्रमेण—

ओं हिरण्यायै नमः (१), ओं सुव्रतायै नमः (२), ओं लक्ष्म्यै नमः (३), ओं विभूत्यै नमः (४), ओं विमलायै नमः (५), ओं प्रियायै नमः (६), ओं जयायै नमः (७), ओं ज्वालायै नमः (८), ओं विशोकायै नमः (९), ओं इडायै नमः (१०), इति।

अत्र चतुष्षष्टिपदपक्षे-अधोमुखपतितवास्तुपुरुषाङ्गे निम्नलिखितक्रमेण स्वस्वपदे देवानावाह्य पूजा कार्या।

तद्यथा-वास्तुपुरुषस्य शिरसि ईशानकोणार्धपदे ईशं शुक्लवर्णम् (१),
तद्दक्षिणे सार्धैकपदे पर्जन्यं पीतवर्णम् (२),
तद्दक्षिणपदे हृदयः पदे चेति द्विपदे दक्षिणश्रोत्रे जयन्तं पीतवर्णम् (३),
तद्दक्षिणपदद्वये दक्षिणांसे शक्रं पीतवर्णम् (४),
तद्दक्षिणपदद्वये दक्षिणकरे भास्करं रक्तवर्णम् (५),
तद्दक्षिणपदद्वये दक्षिणपार्श्वे सत्यं शुक्लवर्णम् (६),
तद्दक्षिणे सार्धैकपदे दक्षिणकूर्परे भृशं कृष्णवर्णम् (७),
तद्दक्षिणोपरिस्थितार्धपदे दक्षिणप्रबाहौ कृष्णवर्णं व्योम (८),
तद्दक्षिणाग्नेयकोणीयाधःस्थार्धपदे दक्षिणप्रबाहौ हुताशनं रक्तवर्णम् (९),
तत्पश्चिमे सार्धैकपदे दक्षिणमणिबन्धे पूषणं रक्तवर्णम् (१०),
तत्पश्चिमपदद्वये दक्षिणपार्श्वे शुक्लवर्णं वितथम् (११),
तत्पश्चिमपदद्वये दक्षिणपार्श्वे पीतवर्णं बृहत्क्षतम् (१२),
तत्पश्चिमपदद्वये दक्षिणोरौ कृष्णवर्णं यमम् (१३),
तत्पश्चिमपदद्वये दक्षिणजानुप्रदेशे रक्तवर्णं गन्धर्वम् (१४),
तत्पश्चिमे सार्धैकपदे दक्षिणजङ्घायां कृष्णवर्णं भृङ्गराजम् (१५),

तत्पश्चिमोपरिस्थार्धपदे दक्षिणस्फिचि मृगं पीतवर्णम् (१६),
तत्पश्चिमे नैर्ऋत्यकोणस्थार्धपदे पादयोः रक्तवर्णान् पितॄन् (१७),
तदुत्तरपदे तत्प्राक्पदार्धे च वामस्फिचि रक्तवर्णं दौवारिकम् (१८),
तदुत्तरपदद्वये वामजङ्घायां शुक्लवर्णं सुग्रीवम् (१९),
तदुत्तरपदद्वये वामजानौ रक्तवर्णं पुष्पदन्तम् (२०),
तदुत्तरपदद्वये वामोरौ शुक्लवर्णं वरुणम् (२१),
तदुत्तरपदद्वये वामपार्श्वे पीतवर्णमसुरम् (२२),
तदुत्तरे सार्धैकपदे वामपार्श्वे कृष्णवर्णं शोषम् (२३),
तदुत्तरोपरिस्थार्धपदे वाममणिबन्धे पीतवर्णं पापयक्ष्माणम् (२४),
तदुत्तरे वायव्यकोणेऽर्धपदे वामप्रबाहौ रक्तवर्णं रोगम् (२५),
तत्प्रागेकपदे तद्दक्षिणार्धपदे च वामप्रबाहौ रक्तवर्णं नागम् (२६),
तत्प्राक्पदद्वये रक्तवर्णं मुख्यम् (२७),
तत्प्राक्पदद्वये वामबाहौ कृष्णवर्णं भल्लाटम् (२८),
तत्प्राक्पदद्वये श्वेतवर्णं सोमम् (२९),
तत्प्राक्पदद्वये वामांशे कृष्णवर्णं भुजगम् (३०),
तत्प्राक् सार्धैकपदे वामश्रोत्रे पीतवर्णामदितिम् (३१),
तत्प्रागर्धपदे वामनेत्रे पीतवर्णां दितिम् (३२),
ततोऽदितिपदार्धाधःस्थैशानकोणार्धपदे मुखे शुक्लवर्णा अपः (३३),
ततस्तदधःस्थार्धपदे उरसि शुक्लवर्णमापवत्सम् (३४),
तद्दक्षिणपदद्वये दक्षिणस्तने कृष्णवर्णमर्यमणम् (३५),
तद्दक्षिणाग्नेयकोणार्धपदे दक्षिणहस्ते रक्तवर्णं सवितारम् (३६),
तदधःस्थाग्नेयकोणार्धपदे दक्षिणहस्ते शुक्लवर्णं सावित्रम् (३७),
तत्पश्चिमदिक्स्थपदद्वये जठरदक्षिणभागे शुक्लवर्णं विवस्वन्तम् (३८),
तत्पश्चिमे–उपरिस्थपदार्धे नैर्ऋत्यकोणे रक्तवर्णमिन्द्रम् (३९),
तदधःस्थार्धपदे नैर्ऋत्यकोणे मेढ्रे श्वेतवर्णं जयम् (४०),
तदुत्तरस्थपदद्वये जठरवामभागे श्वेतवर्णं मित्रम् (४१),
तदुत्तरार्धपदे वायव्यकोणे वामहस्ते श्वेतवर्णं रुद्रदासम् (४२),
तदुत्तरार्धपदे वायव्यकोणे एव वामहस्ते रक्तवर्णं रुद्रम् (४३),
तत्प्रागृदिशिस्थपदद्वये वामस्तने रक्तवर्णं पृथ्वीधरम् (४४),
मध्ये चतुःपदे हृदये नाभौ च ब्रह्माणम् ( ४५ ),
आवाह्य पूजयेत्।
ततो मण्डलबाह्ये कोणे–ऐशान्यां–धूम्रवर्णां चरकीम् (४६),
आग्नेय्यां रक्तवर्णां विदारीम् (४७),

नैर्ऋत्यां-पीतवर्णां पूतनाम् (४८), वायव्ये-कृष्णवर्णां पापराक्षसीम् (४९), आवाह्य पूजयेत् । बाह्यदिशि-पूर्वस्यां पीतवर्णं स्कन्दम् (५०), दक्षिणस्यां-रक्तवर्णमर्यमणम् (५१) पश्चिमायां-कृष्णवर्णं जृम्भकम् (५२) उत्तरस्यां-पिलिपिच्छं कृष्णवर्णम् (५३) एतान् स्वस्वस्थाने आवाह्य पाद्यादिभिः पूजयेत् ।

चतुष्षष्टिपदे चतुर्भुजे देवानां न्यासक्रमः—

पूर्वा

उ० (left) — द० (right)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शिखी / दितिः | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्य | भृशः | आकाशः / अनिलः |
| अदितिः | पर्जन्यः / अदितिः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः / पूषा | पूषा |
| भुजगः | भुजगः | आपवत्सः / आपः | अर्यमा | अर्यमा | सविता / सावित्रः | वितथः | वितथः |
| सोमः | सोमः | पृथ्वीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | गृहक्षतः | गृहक्षतः |
| भल्लाटः | भल्लाटः | पृथ्वीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | यमः | यमः |
| मुख्यः | मुख्यः | रुद्रः / रुद्रदासः | मित्रः | मित्रः | इन्द्रः / जयः | गन्धर्वः | गन्धर्वः |
| नागः | नागः / शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | दौवारिकः / भृङ्गराजः | भृङ्गराजः |
| रोगः / पापयक्ष्मा | शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | दौवारिक | मृगः / पिता |

पश्चिमा

चतुर्ष्षष्टिपदे वृत्ते वास्तौ देवानां न्यासक्रमः—



## एकाशीतिपदे चतुर्भुजे वास्तौ देवानां न्यासक्रमः—

पूर्वा

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शिखी | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्त-रिक्षः | अनिलः अनलो वा |
| दितिः | आपः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | सविता | पूषा |
| अदितिः | अदितिः | आप-वत्सः | अर्यमा | अर्यमा | अर्यमा | सविता | वितथः | वितथः |
| भुजगः | भुजगः | पृथ्वी-धरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | गृहक्षतः | गृहक्षतः |
| सोमः | सोमः | पृथ्वी-धरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | यमः | यमः |
| भल्लाटः | भल्लाटः | पृथ्वी-धरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विव-स्वान् | गन्धर्वः | गन्धर्वः |
| मुख्यः | मुख्यः | राज-यक्ष्मा | मित्रः | मित्रः | मित्रः | इन्द्रः | भृङ्ग-राजः | भृङ्ग-राजः |
| नागः | रुद्रः | शोषः | असुरः | वरुणः | कुसुम-दन्तः | सुग्रीवः | जयः | मृगः |
| रोगः | पाप-यक्ष्मा | शोषः | असुरः | वरुणः | कुसुम-दन्तः | सुग्रीवः | दौवा-रिकः | पिता |

उत्तरा (left) — दक्षिणा (right)

पश्चिमा

## एकाशीतिपदे वृत्ते वास्तौ देवानां न्यासक्रमः

पूर्वा

उत्तरा

पश्चिमा

**एकाशीतिपदे त्रिभुजे वास्तौ देवानां न्यासक्रमः—**



तत्र ग्रामराजमन्दिरयोश्चतुष्षष्टिपदैः, समस्तभवन एकाशीतिपदैः, जीर्णे नवा-ध्यंशकैः, प्रासादे शतांशकैः, सकले मण्डपेऽपि च शतांशकैः, वनवापीतडागकूपेषु षण्णवचन्द्रभागसहितैः पदैः, वास्तुपुरुषः पूज्यः। स्वाभीष्टचक्रे स्वस्वपदेषु क्रमेण देवानावाह्य पूजयेत्। तद्यथा—

ओं भूर्भुवः स्वः शिखिन् इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वः शिखिने नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः पर्जन्य इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्ना-नीयपुनराचमनीयानि ओं भूर्भुवः स्वः पर्जन्याय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्जयन्त इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वर्जयन्ताय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरिन्द्र इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वरिन्द्राय नमः। ए ं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः सूर्य इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयनि ओं भूर्भुवः स्वः सूर्याय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः सत्य इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वः सत्याय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्भृंश इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वर्भृंशाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वराकाश इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय। पुनराचमनीयानि ओं भूर्भुवः स्वराकाशाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरनिल इहागच्छ इह तिष्ठ। एतानि पद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वरनिलाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः पूषन् इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओंभूर्भुवः स्वः पूष्णे नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्ववितथ इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्ववितथाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्गृहक्षत इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वर्गृहक्षताय नमः। एवं चन्दनादिभिः पूजयेत।

ओं भूर्भुवः स्वर्यम इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुन-राचमनीयानि ओं भूर्भुवः स्वर्यमाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्गन्धर्व इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुन-राचमनीयानि ओं भूर्भुवः स्वर्गन्धर्वाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्भृङ्गराज इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्भृङ्गराजाय नमः एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्मृग इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्मृगाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः पितर इहागच्छत इह तिष्ठत। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पितृभ्यो नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्दौवारिक इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्दौवारिकाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः सुग्रीव इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः सुग्रीवाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः कुसुमदन्त इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवःस्वः कुसुमदन्ताय नमः।एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्वरुण इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वरुणाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरसुर इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरसुराय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः शोष इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः शोषाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः पापयक्ष्मन् इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पापयक्ष्मणे नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वा रोग इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वा रोगाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्नाग इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्नागाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्मुख्य इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्मुख्याय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्भल्लाट इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्भल्लाटाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः सोम इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः सोमाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुव स्वर्भुजग इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्भुजगाय नमः। एव चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरदिते इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-

पुनराचमनीयानि ओं भूर्भुवः स्वरदितये नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वदिते इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वदितये नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वरापः इहागच्छत इह तिष्ठत । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः अद्भ्यो नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वरापवत्स इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरापवत्साय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वरर्यमन् इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरर्यम्णे नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वः सवितः इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः सवित्रे नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वः सावित्र इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः सावित्राय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्विवस्वन् इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्विवस्वते नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वरिन्द्र इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरिन्द्राय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्जय इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्जयाय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्मित्र इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्मित्राय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वा रुद्र इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वा रुद्राय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वा रुद्रदास इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वा रुद्रदासाय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वः पृथिवीधर इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पृथ्वीधराय नमः । एवं चन्दनादिभिः पूजयेत् ।

ततो मण्डल मध्ये—ओं भूर्भुवः स्वर्ब्रह्मन् इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्ब्रह्मणे नमः । एवं चन्दनादिभिः पूजयेत् ।

ततो मण्डलबाह्ये—ऐशान्यां ओं भूर्भुवः स्वश्चरकि इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वश्चरक्यै नमः । एवं चन्दनादिभिः पूजयेत् ।

ततः आग्नेय्यां—ओं भूर्भुवः स्वर्विदारि इहागच्छ इह तिष्ठ । एतानि पाद्यार्घा-चमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्विदार्य्यै नमः । एवं चन्दना-दिभिः पूजयेत् ।

ततो नैर्ऋत्यां—ओं भूर्भुवः स्वः पूतने इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीय-स्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पूतनायै नमः । एवं चन्दनादिभिः पूजयेत् ।

ततो वायव्यां—ओं भूर्भुवः स्वः पापराक्षसि इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः पापराक्षस्यै नमः । एवं चन्दनादिभिः पूजयेत् ।

ततो मण्डलबाह्ये पूर्वस्याम्—

ओं भूर्भुवः स्वः स्कन्द इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुन-राचमनीयानि ओं भूर्भुव स्वः स्कन्दाय नमः । एवं चन्दनादिभिः पूजयेत् ।

ततो दक्षिणस्यां—ओं भूर्भुवः स्वरर्यमन् इहागच्छ इह तिष्ठ । एतानि पाद्या-र्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरर्य्यम्णे नमः । एवं चन्दना-दिभिः पूजयेत् ।

ततः पश्चिमायां—ओं भूर्भुवः स्वर्जृम्भक इहागच्छ इह तिष्ठ । एतानि पा-द्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्जृम्भकाय नमः । एवं चन्दना-दिभिः पूजयेत् ।

तत उत्तरस्यां—ओं भूर्भुवः स्वः पिच्छिल इहागच्छ इह तिष्ठ । एतानि पाद्यार्घा-चमनीयानि ओं भूर्भुवः स्वः पिच्छिलाय नमः । एवं चन्दनादिभिः पूजयेत् ।

अथ मण्डलकरणासामर्थ्ये सर्वे मण्डलीया देवा जले शालग्रामसमीपे वा पूज्याः ।

यथोक्तं पद्मपुराणे—

शालग्रामशिलारूपी यत्र तिष्ठति केशवः । तत्र देवासुरा यक्षा भुवनानि चतुर्दश ॥इति ।

तत्रावाहनविसर्जने न स्तस्तदुक्तं तत्रैव—शालग्रामे जले चैव नावाहनविसर्जने ।

तथा च बौधायनः—प्रतिमास्थानेष्वप्सु नावाहनविसर्जनमिति ।

अथ मण्डलकरणासमर्थासमर्थाभ्यां द्वाभ्यामेवाधस्थाः सुराः पूज्याः ।

तद्यथा—स्वसम्मुखे कदल्यादिपत्रोपरि क्रमेण गणेशादिदेवानां प्रपूजनम् ।

ओं भुर्भूवः स्वर्गणेश इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुन-राचमनीयानि ओं भूर्भुवः स्वर्गणेशाय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्दुर्गे इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनराच-मनीयानि ओं भूर्भुवः स्वर्दुर्गायै नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्वात इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्नानीयपुनरा-चमनीयानि ओं भूर्भुवः स्वर्वाताय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्भीमरस इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्भीमरसाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरुग्रसेन इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरुग्रसेनाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्डामर इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्डामराय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्महाकाल इहागच्छ इह तिष्ठ। एतानि पा र्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्महाकालाय नमः। एवं चन्दनादिभिः पूजयेत्।

ततोऽष्टदिक्पालान् पृथक् पृथक् क्रमेण पूजयेत्। तद्यथा—

ओं भूर्भुवः स्वरिन्द्र इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरिन्द्राय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरग्ने इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वरग्नये नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्यम इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्यमाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्निर्ऋते इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्निर्ऋतये नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्वरुण इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वरुणाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्वायो इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वायवे नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वः कुबेर इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वः कुबेराय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वरीशान इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयपुनराचमनीयानि ओं भूर्भुवः स्वरीशानाय नमः। एवं चंदनादिभिः पूजयेत्।

एवमष्टौ दिक्पालान् पृथक् २ अथवा समष्टयैवावाह्य पूजयेत्। ततः पत्रे ब्रह्मा पूज्यः—

ओं भूर्भुवः स्वर्ब्रह्मन् इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्ब्रह्मणे नमः। एवं चन्दनादिभिः पूजयेत्।

ब्रह्मणः स्थाने वासुदेवं लक्ष्मीञ्चावाह्य पूजयेत्। तद्यथा —

ओं भूर्भुवः स्वर्वासुदेव इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वासुदेवाय नमः। एवं चन्दनादिभिः पूजयेत्।

ओं भूर्भुवः स्वर्लक्ष्मि इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वर्लक्ष्म्यै नमः। एवं चन्दनसिन्दूरादिभिः पूजयेत्।

ततो रजतीं पृथ्वीं ध्यायेत्। तत्र ध्यानमन्त्रः—

ओं सुरूपां प्रमदारूपां दिव्याभरणभूषिताम्।
सर्वलोककरीं देवीं परितुष्टां स्मिताननाम्॥ इति ध्यात्वा।

ओं पृथिवि इहागच्छ इह तिष्ठ, इत्यावाह्य। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं लं पृथिव्यै नमः। एवं चन्दनादिभिः पूजयेत्।

ततः "सर्वदेवमयं हरिम्" ध्यात्वा। ओं हरे इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं हरये नमः। एवं चन्दनादिभिः पूजयेत्।

ततो मध्यमण्डले—सुवर्णमयं कृकलासाकारस्वरूपं सकलदेवाधिष्ठितावयवं अधोमुखमीशानकोणशिरसं नैर्ऋत्यकोणगतपादं एतादृशं वास्तुपुरुषं ध्यात्वा—

ओं वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः।
यत्त्वेमहे प्रतितन्नोजुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे॥

ओं आगच्छ भगवन् वास्तो सर्वदेवैरधिष्ठित।
भगवन् कुरु कल्याणं गृहेऽस्मिन्सन्निधीभव॥

ओं भूर्भुवः स्ववास्तुपुरुष इहागच्छ इह तिष्ठ, इत्यावाह्य। इदमासनं ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। इदं शुक्लवासोयुगं बृहस्पतिदैवतं ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। इदमनुलेपनं ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। इदमक्षतं ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। एतानि पुष्पाणि ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। इदं भूषणं ओं भूर्भुवः स्ववास्तुपुरुषायः नमः। इदं माल्यं ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि ओं भूर्भुवः स्ववास्तुपुरुषाय नमः। इदमाचमनीयं ओं भूर्भुवः स्ववास्तुरुषाय नमः। एष पुष्पाञ्जलिः ओं भूर्भुवः स्ववास्तुपुरुषाय नमः।

अथ प्रार्थनामन्त्रः—

ओं पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः।
प्रसीद पाहि विश्वेश देहि मे गृहजं सुखम्॥
ओं नमस्ते वास्तुपुरुष भूशय्यानिरत प्रभो।
मद्गृहे धनधान्यादिसमृद्धिं कुरु सर्वदा॥ इत्यनेन प्रार्थयेत्। (१)

---

(१) ततो बलिदानमन्त्रः—

ओं बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा।
मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः॥

ततो हवनविधिः । तत्र क्रमः कुशैर्हस्तमात्रपरिमितचतुरस्रां भूमिं परिसमुह्य तान् कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवमूलेन वा प्रादेशमात्रं त्रिरुल्लिख्योल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेणाग्निमानीय प्रत्यङ्मुखं तत्र निदध्यात् । ततः पुष्पचन्दनताम्बूलयज्ञोपवीतवासोभिर्ब्रह्माणं वृणुयात् । तद्यथा—ओं अत्र गृहप्रवेशहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलयज्ञोपवीतवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ ओं वृतोस्मीति प्रतिवचनम् । ओं यथा विहितं कर्म कुरु इति यजमानेनोक्ते, ओं करवाणीति प्रतिवचनम् । ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्वा तत्र प्रागग्रान्कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय ओं अस्मिन् कर्मणि त्वम्मे ब्रह्मा भवेत्यभिधाय, ओं भवानीति तेनोक्ते कल्पितासने उपवेशयेत् ।

ब्राह्मणाभावे—ओं अद्य कर्त्तव्यगृहप्रवेशहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मकर्तुमस्मिन् कर्म्मणि त्वम्मे ब्रह्मा भवेत्यभिधाय आसने पञ्चाशत्कुशात्मकं ब्रह्माणमुपवेशयेत् ।

ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्य्यन्तं नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणीतापर्य्यन्तम् । ततः पवित्रच्छेदनार्थं कुशपत्रत्रयं पवित्रकरणार्थं साग्रमनन्तर्गर्भं कुशपत्रद्वयं, प्रोक्षणीपात्रं, आज्यस्थाली, सम्मार्जनकुशाः, वेणीरूपोपयमनकुशाः, स्रुवः, आज्यम् , अर्कादिसमिधः, षट्पञ्चाशदुत्तरमुष्टिशतद्वयावच्छिन्नतण्डुलपूर्णपात्रं ब्रह्मदक्षिणार्थं, एतानि पवित्रच्छेदनकुशानां पूर्वं-पूर्वं-दिशि क्रमेणासादनीयानि । ततः पवित्रच्छेदनकुशैः स्वप्रादेशमितपवित्रे छित्वा, ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधायानामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम् । ततः प्रोक्षणीपात्रं वामहस्ते कृत्वा, अनामिकाङ्गुष्ठाभ्यां पवित्रे गृही-

---

असुरा यातुधानाश्च पिशाचोरगराक्षसाः ।
डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ।
जृम्भकाः सिद्धगन्धर्वा देवा विद्याधरा नगाः ॥
दिक्पाला लोकपालाश्च ये च विघ्नविधायकाः ।
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ॥
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥
एतेभ्यो देवेभ्यः पृथक् पृथक् समष्ट्या वा बलिं दद्यात् ।
इति कचिद्व्यवहारः ।

त्वा त्रिरुत्पवनम् । प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेनासादितवस्तुसेचनम् । ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रंनिदध्यात् । आज्यस्थाल्यामाज्यं कृत्वा, ततोऽधिश्रयणम्, ततो ज्वलत्तृणं तस्योपरि भ्रामयित्वा तृणमग्नौ क्षिपेत् । ततः स्रुवं निःप्रतप्य, सम्मार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं सम्मृज्य, प्रणीताजलेन सिक्त्वा पुनस्तं निःप्रतप्य, स्वदक्षिणतः कुशोपरि निदध्यात् । ततः आज्यमग्नेः प्रदक्षिणक्रमेणावतार्य, आज्ये प्रोक्षणीवदुत्पवनम् । अवेक्ष्य सत्यपद्रव्ये तन्निरसनम् । पुनः प्रोक्षण्युत्पवनम् । तत उपयमनकुशान् वामहस्ते कृत्वा प्रजापतिम्मनसा ध्यात्वा उत्तिष्ठन् घृताक्तांस्तूष्णीमग्नौ क्षिपेत् । तत उपविश्य प्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य, प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतिर्जुहुयात् । अत्राघाराज्यभागेष्वाहुतिचतुष्टयेषु स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः, यथा—

ओं प्रजापतये स्वाहा, इदं प्रजापतये, इति मनसा । ओं इन्द्राय स्वाहा, इदमिन्द्राय, इत्याघारौ । ओं अग्नये स्वाहा, इदमग्नये । ओं सोमाय स्वाहा, इदं सोमाय, इत्याज्यभागौ । ओं भूः स्वाहा, इदं भूः । ओं भुवः स्वाहा, इदं भुवः । ओं स्वः स्वाहा, इदं स्वः, एता महाव्याहृतयः ।

ततः—ओं त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा, इदमग्नीवरुणाभ्याम् ।

ओं स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्वनो वरुणᳬ रराणो वीहिमृडीकᳬ सुहवोनएधि स्वाहा, इदमग्नीवरुणाभ्याम् ।

ओं अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाअसि । अयानोयज्ञँव्वहास्यानो धेहि भेषजᳬ स्वाहा, इदमग्नये ।

ओं येतेशतव्वँरुण ये सहस्रं यज्ञियाः पाशावितता महान्तः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यः ।

ओं उदुत्तमव्वँरुण पाशमस्मदवाधमं विमध्यमᳬ श्रथाय । अथावयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा, इदं वरुणाय । ततः शाकल्येन पूजितसर्वदेवताभ्यः प्रणवादिस्वाहान्तचतुर्थ्यन्तनाममन्त्रैरष्टोत्तरशतमष्टौ वा जुहुयात् । तद्यथा—

ओं शिखिने स्वाहा, ओं पर्जन्याय स्वाहा, ओं जयन्ताय स्वाहा, ओं इन्द्राय स्वाहा, ओं सूर्याय स्वाहा, ओं सत्याय स्वाहा, ओं भृशाय स्वाहा, ओं अन्तरिक्षाय स्वाहा, ओं अनिलाय स्वाहा, ओं पूष्णे स्वाहा, ओं वितथाय स्वाहा, ओं गृहक्षताय स्वाहा, ओं यमाय स्वाहा, ओं गन्धर्वाय स्वाहा, ओं भृङ्गराजाय स्वाहा, ओं मृगाय स्वाहा, ओं पितृभ्यः स्वाहा, ओं दौवारिकाय स्वाहा, ओं सुग्रीवाय स्वाहा, ओं कुसुमदन्ताय स्वाहा, ओं वरुणाय स्वाहा, ओं असुराय स्वाहा, ओं

शोषाय स्वाहा, ओं पापयक्ष्मणे स्वाहा, ओं रोगाय स्वाहा, ओं नागाय स्वाहा, ओं मुख्याय स्वाहा, ओं भल्लाटाय स्वाहा, ओं सोमाय स्वाहा, ओं भुजगाय स्वाहा, ओं अदितये स्वाहा, ओं दितये स्वाहा, ओं अद्भ्यः स्वाहा, ओं आपवत्साय स्वाहा, ओं अर्यम्णे स्वाहा, ओं सवित्रे स्वाहा, ओं सावित्राय स्वाहा, ओं विवस्वते स्वाहा, ओं इन्द्राय स्वाहा, ओं जयाय स्वाहा, ओं मित्राय स्वाहा, ओं रुद्राय स्वाहा, ओं रुद्रदासाय स्वाहा, ओं पृथ्वीधराय स्वाहा, ओं ब्रह्मणे स्वाहा, ओं चरक्यै स्वाहा, ओं विदार्य्यै स्वाहा, ओं पूतनायै स्वाहा, ओं पापराक्षस्यै स्वाहा, ओं स्कन्दाय स्वाहा, ओं अर्य्यम्णे स्वाहा, ओं जृम्भकाय स्वाहा, ओं पिलिपिञ्छलाय स्वाहा, ओं वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे स्वाहा ( १०८ )।

ततो ब्रह्मदक्षिणा—ओं अद्य कृतैतद्गृहप्रवेशहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं अमुकगोत्राय अमुकशर्म्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं सम्प्रददे। ओं स्वस्तीति प्रतिवचनम्। ततोऽग्निप्रदक्षिणक्रमेण ब्रह्माणमुत्थापयेत्। ततः परिस्तरणक्रमेण बर्हिरुत्थाप्य घृतेनाभिधार्य्य हस्तेनैव जुहुयात्, ओं देवागातु विदोगातुं वित्वागातुमितमनसस्पत इमन्देवयज्ञꣳस्वाहा, वातेधाः स्वाहा। ततः फलपुष्पताम्बूलसहितघृतयुतस्रुवेण पूर्णाहुतिं दद्यात्। ओं मूर्द्धानन्दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्तदेवाः स्वाहा, तत उपविश्य स्रुवेण भस्मानीय त्र्यायुषं कुर्य्यात्। ओं त्र्यायुषं जमदग्नेः, इति ललाटे। ओं कश्यपस्य त्र्यायुषं इति ग्रीवायाम्। ओंयद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले। ओं तन्नो अस्तु त्र्यायुषमिति हृदि।

ततः प्रार्थनामन्त्राः—

ओं भगवन् देवदेवेश त्वं पिता सर्वदेहिनाम्। यज्ञरूपेण भगवंस्त्वयाव्याप्तं चराचरम्॥
जानताऽजानता वापि शास्त्रोक्तं न कृतं हि यत्। तच्च सम्पूर्णमेवास्तु प्रसन्नो भव सर्वदा।
इष्टान् कामान् प्रयच्छ त्वं दुर्भाग्यं च विनाशय। पुत्रपौत्रादिवृद्धिं च सततं कुरु देव नः॥
यावच्चन्द्रो नगाः सूर्यस्तिष्ठन्ति प्रतिपादिताः। तावत्त्वयात्र देवेश स्थेयं भक्त्यानुकम्पया॥*

इति सम्प्रार्थ्य, पुनरर्घं दत्वा, पृथक् पृथगथवा पूजितदेवाः पूजिताःस्थ क्षमध्वमिति समष्ट्यैव पूजितदेवान् विसृजेत्।

ततो दक्षिणा—ओं अद्य कृतैतद्गृहप्रवेशपूजनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहन्ददे। इति पुरोहिताय दक्षिणां दत्वा यथाशक्ति ब्राह्मणान् भोजयेत्। इति गृहप्रवेशपद्धतिर्द्वितीयः।

---

* अत्र विशेषः—

प्रार्थयामीत्यहं देवं शालाया अधिपस्तु यः। प्रायश्चित्तं प्रसङ्गेन गृहार्थं यन्मयाकृतम्॥

## अथ गृहे गृध्रादिपतनशान्तिपद्धतिः ।

### तत्र गृहे गृध्रादिपतने विचारः ।

तत्र नारदः—

गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च ।
चिल्लश्च चर्मचिलश्च भासः पाण्डुर एव च ॥
गृहे यस्य पतन्त्येते तस्य गेहं विपद्यते ।
पत्नी वा म्रियते तत्र पुत्रो वा भ्रातरस्तथा ॥
धनं तस्य प्रणश्येत षड्भिर्मासैर्न संशयः ।

तत्र शान्तिमाह—

चरुं च यमदैवत्यं शतमेकं जुहोति च ।
तिलैर्धान्यैर्यवैश्चैव घृतेन मधुना सह ॥
जुहुयात् पञ्चसहस्राणि शक्तिबीजेन मन्त्रवित् ।
कलायैश्चैव माषैश्च मुद्गैश्च सिततण्डुलैः ॥

घृतेन दधिना चैव कुण्डे तत्र निवेदनम् । सम्पूर्णांश्च शरावांश्च पत्रेणैव निवेदयेत् ॥
परिधायाहतं वासो जप्त्वा मन्त्रं समाहितः । अष्टोत्तरशतं जप्त्वा पत्रं वा श्रीफलस्य च ॥
कुशावर्त्तं तु तेनैव शिखायां धारयेत्ततः । हविष्यभुग्भवेत्तावद्यावद्धोमः समाप्यते ॥
एकरात्रोषितो भूत्वा गृहं विप्राय दापयेत् । मूलेनैवः ततः कृत्वा स्नापयेत्कलशेन तु ॥
धेनुञ्च दक्षिणां दद्याद्वस्त्रयुग्मं सकाञ्चनम् । भोज्यं तु कारयेत्तत्र ततः सम्पद्यते शुभम् ॥

मत्स्यपुराणविष्णुधर्मोत्तरयोः—

केतुच्छत्रायुधाद्येषु क्रव्यादः सम्पतेद्यदि । जायते चाथ वल्मीको मधुनाऽध्यासते यदि ॥
स देशो वशमायाति राजाऽथ म्रियते तदा । उलूको वासते यत्र निपतेद्वा तथा गृहे ॥
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च । द्वारप्राकारगेहेषु प्रासादतोरणध्वजे ॥
पतन्ति बहवो गृध्राः काकोलूकबकैः सह । अथाप्येतेषु स्थानेषु मधु सञ्जायते यदि ॥
नलिन्यश्चात्र वल्मीके षण्मासैर्म्रियते नृपः ।

तथाच मयूरचित्रे—

खगौघपतनं चैत्ये गृहद्वारेषु तोरणे । मधुवल्मीकपद्मानां जननाशः सदा भवेत् ॥
उलूकश्चैव गृध्रश्च कपोतः श्येन एव च । पतन्ति भवने यस्य तस्य प्राहुर्महद्भयम् ॥

---

मूलच्छेदं तृणच्छेदं कृमिकीटनिपातनम् । हननं जलजीवानां भूमौ शस्त्रेण घातनम् ॥
अनृतं भाषितं यच्च किञ्चिद्वृक्षस्य पातनम् । एतत्सर्वं क्षमस्वैनो यन्मया दुष्कृतं कृतम् ॥
गृहार्थं यत्कृतं पापमज्ञानेनाथ चेतसा । तत्स क्षम्यतां देव गृहशालां शुभां कुरु ॥
सशैलसागरां पृथ्वीं यथा वहसि मूर्द्धनि । तथा मां वह कल्याण सम्पत्सन्ततिभिः सह ॥

पश्चान्मासात्तथा वर्षान्मृत्युः स्याद् गृहमेधिनः ।
पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यं चैव प्रणश्यति ॥
ब्राह्मणाय गृहं दद्याद्दत्वा तन्मूल्यमेव च ।
गृह्णीयाद्यदि रोचेत शान्तिं चैतां प्रयोजयेत् ॥
चरुं यवमयं कृत्वा अश्वत्थसमिधोऽयुतम् ।
मनसः काममित्येतद्ध्यात्वा जप्त्वा सुखी भवेत् ॥
यदि वा वर्धनी चेति तया शान्तिः प्रदिश्यते ।
ऐन्द्रीं शान्तिं ततः कुर्यात् त्रातारमिति मन्त्रतः ॥
औदुम्बरीश्च समिधो जुहुयाद् घृतसंयुताः । अष्टोत्तरसहस्राणि पञ्च तच्छान्तिकाम्यया ॥
चरुं कर्माशनं चैव विप्रान् दधिगुडौदनैः । तर्पयित्वा वरं हेम दद्याद् धेनुं च दक्षिणाम् ॥

देवलस्तु—काकः कपोतो गृध्रो वा वायसो वापि मूर्द्धनि ।
क्रव्यादाः पक्षिणश्चैव षण्मासन्न निवर्तते ॥

मार्कण्डेयपुराणे—गृध्रः कपोतः काको वा वायसो वापि मूर्द्धनि ।
क्रव्यादो वा खगो लीनः षण्मासन्न स जीवति ॥

तत्रैव—उलूकश्चैव गृध्रश्च कपोतः श्येन एव च ।
पतन्ति भवने यस्य तस्य प्राहुर्महद्भयम् ॥
पश्चान्मासांस्तथा वर्षान्मृत्युः स्याद् गृहमेधिनः ॥
पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यञ्चैव प्रणश्यति ॥

अथ नारदः—यस्य गेहे शृगालादिः प्रविष्टोऽथ प्रसूयते ।
गृहं तस्य विनश्येत प्रभुर्वा म्रियते पुनः ॥
पत्नी वा म्रियते तस्य पुत्रस्य मरणं भवेत् । गृहोत्सादो भवेत्तस्य धनं चैव प्रक्षीयते ॥
दधिमधुघृताक्तानां पत्राणां श्रीफलस्य च । जुहुयादष्टसहस्राणि वैश्वानरेति मन्त्रवित् ॥
सुवर्णं वस्त्रयुग्मं च धेनुं चापि पयस्विनीम् ।
विप्राय दक्षिणां दद्यात् ततः सम्पद्यते शुभम् ।
फणिनोऽभिमुखं यत्र प्रविशन्ति गृहं यदा ॥
निर्यान्ति च पुनस्तद्वत् तस्य लिङ्गानि मे शृणु ॥
प्रमुखो म्रियते तत्र धनहानिर्न संशयः । दधिमधुघृताक्तानां यः शम्याः समिधोऽयुतम् ॥
जुहुयात्तस्य गेहे तु शन्नो देवीति मन्त्रवित् ।
धेनुं च दक्षिणां दद्यात् सुवर्णं वस्त्रयुग्मकम् ॥
एवं निवर्तिते होमे शुभं भवति सर्वतः ।

मयूरचित्रे—गृहीत्वा तु शवस्याङ्गमन्ये तु मृगपक्षिणः ।
प्रविशन्ति गृहे यस्य षड्भिर्मासैर्विनश्यति ॥

आज्यहोमो महादानं तत्र शान्त्यै प्रवक्ष्यते ।
तत्रैव—गृहद्वारेण सर्पस्य प्रवेशे गृहिणीवधः ।
षड्भिर्मासैर्न सन्देह उपोष्य जुहुयात्ततः ॥
इध्मिमधुघृताक्तानामयुतं जुहुयाच्छुचिः । वैकङ्कतस्य विप्राय ताम्रं दद्याच्च दक्षिणाम् ॥
तत्रैव—अकस्माद् दुग्धधाराश्च पतन्ति जलबिन्दवः ।
घृतं तैलं वसा मांसं पतन्ति भवनेऽथवा ॥
ज्वरः श्वासश्च दद्रुश्च कुष्ठं कासो विचर्चिका ।
पाण्डुरोगः शिरोरोगो भवन्ति व्याधयोऽपरे ॥
आर्द्रकपतने प्रोक्तामैन्द्रीं शान्तिं तु कारयेत् । रक्तधारां गृहे दृष्ट्वा प्राङ्गणे चादिशेद्रणम् ॥
तत्रैव—अकस्माद् गृहमध्ये तु कोकरावं विमुञ्चति ।
मासाभ्यन्तरमात्रेण गर्भस्योत्सादनं तु तत् ॥
अत्रापि प्रथमा शान्तिर्यमलोत्पत्तिसम्भवा ।
तत्रैव—मांसास्थीनि समादाय श्मशानोन्मत्तवायसः ।
श्वा शृगालोऽथवा मध्ये पुरस्य प्रविशेद्यदि ॥
विकिरन्ति गृहादौ च श्मशानं सा मही भवेत् । चौरेण ह्रियते लोकः परचक्रस्य चागमः ॥
संग्रामश्च महाघोरो दुर्भिक्षं मरकं तथा । ऐन्द्री शान्तिस्ततः कार्या वर्धनी पतनोदिता ॥
अथवाऽश्वत्थसमिधो हुत्वा मध्वन्वितास्तिलाः ।
वैवस्वतेन मन्त्रेण निवेद्यान्नाः सफाणिताः ॥
तिलं घृतोपहारश्च क्षीरशान्तिं च कारयेत् । ततः शाम्यति तत्पापं प्रजापतिमतं यथा ॥
तत्रैव—यस्य गेहस्य कम्पेते स्तम्भवंशावकारणम् ।
दम्पत्योर्जायते मृत्युरत्र शान्तिरियं मता ॥
अथ्यहोतव्यमयुतं दूर्वाणां समिधा ततः ।
काण्डात् काण्डेति मन्त्रेण हेम दद्यात् सभोजनम् ॥
तत्रैव—यदा कटकटायन्ते भवनान्यायुधानि च ।
मासाभ्यन्तरमात्रेण तदा संग्राममादिशेत् ॥
दिव्याऽत्रैकादशी शान्तिः करणीया विपश्चिता ।
निर्भग्ने तोरणे द्वारे शान्तिरत्रैव दिव्यजा ॥
नारदः—मृगाश्चैव वराहाश्च व्याघ्रशार्दूलजम्बुकाः ।
निपतन्ति गृहे यत्र गोरूपाणि तथैव च ॥
मधुवासो भवेद्यत्र द्वारे वा लौहकीलकम् । योजितं चापि गोयुग्मं प्रविशेद्भवनं यदि ॥
गोशालास्वश्वशालासु सुखशालासु वै तथा ।
गृध्रादयः पतन्त्येते ततः शान्तिं समाचरेत् ।

धान्यानामयुतं तत्र जुहुयात् होमकृन्नरः । धेनुं च दक्षिणां दद्यात्ततः सम्पद्यते शुभम् ॥

तत्रैव—स्थूणा च कम्पते यत्र गृहं कटकटायते ।

गृहं तत्र प्रशीर्येत म्रियते गृहिणी तथा ॥

दधिमधुघृताक्तानां तिलानामयुतं ततः । होमयेत्तत्र धेनुं च दक्षिणात्वेन कल्पयेत् ॥

वस्त्रयुग्मं प्रदातव्यं काञ्चनेन समन्वितम् । ब्राह्मणान् भोजयेत्तत्र धान्यं दद्यात्तु दक्षिणाम् ॥

तत्रैव—मण्डपस्य यदा भित्तिश्चूडा देवकुलस्य च ।

अकस्माद्भिद्यते यत्र कम्पते वाऽनिमित्ततः ॥

राज्ञो भयं च दुर्भिक्षं वृष्टिहानिस्तथैव च । अग्निदाहश्च सम्पातो देशे च मरकं भवेत् ॥

दधिमधुघृताक्तानामश्वत्थसमिधां ततः ।

अथोल्काविद्युदशनीनामाश्रयविशेषेषु पातफलम्—

ग्रहचंसोमसूर्येषु निपतेत्तोरणे ध्वजे । गृहे च निपतेद्यत्र तत्रापि भयमादिशेत् ॥

अथ मयूरचित्रे त्वेवमाह—

तोरणाध्वजगेहेषु स्वामिनां वधमादिशेत् ।

अथ वराहसंहितायामेवमाह—

कुर्वन्त्येताः पतिता देवप्रतिमासु राष्ट्रभयम् ।

शक्रोपरि नृपतीनां गेहेषु तत्स्वामिनां पीडा ॥

चैत्यतरौ सम्पतिता सत्कृतपीडां करोत्युल्का ।

द्वारि पुरस्य पुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः ॥

अथ बार्हस्पत्ये—

देवतार्चासु पतनाद्राजराष्ट्रभयं भवेत् । एतासामिन्द्रशिरसि पतने नृपतेर्भयम् ॥

द्वारि वा पुःक्षयं विन्द्याद्गृहे तत्स्वामिनो भयम् ।

चैत्यवृक्षादिपातेषु सत्कृतानां महद्भयम् ॥

पुरद्वारि पुरक्षोभमिन्द्रकीले जनक्षयः ।

अथ मयूरचित्रे—

प्रासादे भवने क्षेत्रे ग्राममध्ये तथा गिरौ । निर्घातश्चाशनिश्चैव पतिता यदि कर्हिचित् ॥

भयं तत्र विजानीयाच्छान्तिः साधारणी त्विह ।

अथान्यदप्याह—

प्रतोल्यां नगरद्वारे तोरणे राजवेश्मनि । गजगोवाजिशालासु पार्थिवानां गृहेषु च ॥

शान्तिगेहे देवगेहे राजमार्गचतुष्पथे । उल्का वा यदि वा वज्रं पततश्चेत्कथञ्चन ॥

मासस्याभ्यन्तरे चैव तत्र विन्द्यान्महद्भयम् । राजा जनपदः पौरो भवेद्यश्च पुरोहितः ॥

द्वितीया शान्तिरत्रोक्ता विशेषस्त्वेष केवलः ।

त्रिषु स्थानेषु जायन्ते महोत्पाताश्च तेष्विमाम् ॥

शान्तिं कुर्याच्चरुं चास्य प्राशनं दक्षिणामपि ।

अथान्यदप्याह—

प्राकारे नगरद्वारे तोरणे राजवेश्मनि । गजशालाश्वशालायां विद्युत्पतने सति ॥
विनश्यति बलाध्यक्षः प्रथमा शान्तिरत्र तु ।

पुनरन्यदाह—

वज्रमुल्काशनिर्वापि गृहादौ निपतेद्यदि । वर्षस्याभ्यन्तरे चैव भयं विद्याजनक्षयम् ॥
राजामात्यविनाशः स्याच्छान्तिरत्राग्निचोदिता ।
त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः ॥
अपामार्गस्य समिधैः सहस्रं जुहुयाद् बुधः ।
अष्टोत्तरं ततो विप्रान् भोजयेत् पायसेन तु ॥
एककालैकवर्णानां गवां क्षीरं समाहरेत् । हुत्वाहुतिशतं विप्रो मन्त्रेणैन्द्रेण मन्त्रवित् ॥
सुवर्णं रजतं कांस्यं हुत्यन्ते भूरिदक्षिणाम् ।

अथात्र नारदस्त्वेवमाह—

गृहे वज्रं पतेद्यत्र तत्र दोषं विनिर्दिशेत् । धनं पुत्राश्च नश्यन्ति स्वयं नश्यति वा प्रभुः ॥
कुमारद्रेसिमन्त्रेण होम एव विधीयते । विप्राय दापयेत् तत्र तिलपात्रं सकाञ्चनम् ॥
धेनुञ्च वृषभं चैव ततः सम्पद्यते शुभम् ।

अथान्यदप्याह—

यत्र देवकुले वज्रं पतेद्गृध्रोऽपि वा पुनः । ईशानो म्रियते यत्र वज्रेणैवाहतः क्वचित् ॥
ग्रामोत्पादो भवेत्तत्र स्वामिनो मरणं दिशेत् ।
राज्ञो वा मरणं राष्ट्रं धनं धान्यञ्च नश्यति ॥
अत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
रत्निमात्रमतः खात्वा अधस्ताद् द्वादशाङ्गुलम् ॥
कुण्डं कृत्वा विधानेन ततो होमं समाचरेत् ।
शुचिश्च प्रयतो भूत्वा अग्निः स्थाप्यो विधानतः ॥
परिधाप्याहतं वासः शोभनं द्विजसत्तम । ससुवर्णेन हस्तेन ततः कर्म समाचरेत् ॥
अष्टोत्तरशतं हुत्वा घृताक्तं समिधां ततः ।
माषैर्मुद्गैस्तिलैश्चैव तण्डुलैश्च सितैस्तथा ॥
घृतेन मधुना चैव नवेद्यानि तु कारयेत् । सम्पूर्णानां शरावाणां कुण्डे कुर्य्याद्विधापनम् ॥
तिलैर्धान्यैर्यवैश्चैव घृतेन मधुना सह । एभिः पञ्च सहस्राणि शक्तिबीजेन होमयेत् ॥
होमान्ते तर्पयेद्विप्रान् दक्षिणाभोजनादिभिः ।
भूमिं धेनुमनड्वाहं स्वर्णं धान्यं च दक्षिणाम् ॥
पञ्चगव्यं ततः कृत्वा स्नायाद् देवालयं द्विजः ।
कलशेन पुनः स्नायाद् देवं सम्पूज्य यत्नतः ॥

आथर्वणाद्भुते एवमाह—
'काकोलूकबकागृध्रा हंसाः श्येनाः कपोतकाः ।
गृहे रथे ध्वजे वापि पतन्त्येतेऽप्यकारणात् ॥
उत्पन्ना मधुवल्मीकवरटाच्छत्रिका तथा । उत्पाटयतेऽयथाकाले सद्भिर्यादद्भुतं महत् ॥
मानुषाणां पतेद् गेहे काको द्वारि कटायते । स्थूणा प्ररोहते यत्र तदद्भुतं च सहज्जवेत् ॥
श्वासिराजीवतप्तं तु द्वित्र्यनेकशिरस्तथा । संहताश्चैव युध्यन्ते आत्मना इलन्ति च ॥
अजा गावो महिष्यश्च दह्यमानाः स्रवेदसृक् ।
सूर्याद्भुतं विजानीयात् पूजयित्वा दिवाकरम् ॥
दध्याज्यमधुसंयुक्तसमिधस्त्वक्सम्भवाः । मन्त्रिराजप्रभृतिभिर्जुहुयादाज्यमेव च ॥
सुवर्णसहितां गाञ्च दद्याद्धोत्रे च दक्षिणाम् ।
सर्वे दोषाः प्रणश्यन्ति ततः सम्पद्यते शुभम् ॥
अथ मयूरचित्रे—प्रासादे भवने क्षेत्रे ग्राममध्ये तथा गवि ।
निर्घातोऽशनिरुल्का च पतन्ति यदि सन्ध्ययोः ॥
रात्रौ शक्रधनुर्व्योम्नि भूपदेशस्तथावहः । विश्वावर्त्तीति वायुश्च तीव्रो वा मृदु एव च ॥
पतेदुल्का तथा तस्मिन् वायव्यः पच्यते चरुः ।
अप्रसूतं प्रसूतानां स्त्रीणां यः स्मर्य्यते बुधैः ॥
उल्कापाते सदिग्दाहे दिशां दाहे यथाक्रमम् । प्रवर्तिते तु संग्रामे रोगोपद्रव एव च ॥
अत्र शान्तिमाह—शान्तिमत्र प्रवक्ष्यामि सर्वोत्पातनिवर्हणीम् ।
इमा रुद्रेति मन्त्रेण समिधः कनकस्य च ॥
अष्टोत्तरसहस्रं तु घृताक्तां जुहुयाच्छुचिः । रुद्रैकादशकं जप्यं महिषो बलिरेव च ॥
कुर्य्याच्छिवोत्सवं चैव भूमिदोहसमं ततः । ग्रामे वा नगरे चैव गोष्ठे च शिवसन्निधौ ॥
शान्तिकर्माणि कुर्वीत नृपादेशो द्विजातिकः ।
चरुः कार्योऽशन तस्य पूजयित्वा द्विजांस्तथा ॥
पायसं मधुसंयुक्तं दधि सर्पिः पयोयुतम् । शतमष्टाधिकं चैव जपेद्रुद्रसमाहितः ॥
सुवर्णं रजतं कांस्यं मणिरत्नविभूषितम् । ब्राह्मणाय तथा दद्याद्व्रतान्ते चैव मेदिनीम् ॥
जुहुयादष्टशतं प्राज्ञ इमारुद्रेति मन्त्रवित् । धेनुं च दक्षिणां दद्यात्तिलपात्रं सकाञ्चनम् ॥
तत्रैव—अकस्माद् गृहभूमिस्तु स्फुटते कुड्यकम्पनम् ।
गृहं च कम्पते यत्र कोकरावं विमुञ्चति ॥
गृहं वा पतते विप्र मूर्धवंशश्च भिद्यते । यस्य गेहे शृगालादिः प्रविष्टोऽथ प्रसूयते ॥
गृहं तस्य विनश्येत प्रसुर्वा म्रियते पुनः । पत्नी वा म्रियते तस्य पुत्रस्य मरणं भवेत् ॥
गृहोन्मादी भवेत्तस्य धनं चैव प्रलीयते । दधिमधुघृताक्तानां पत्राणां श्रीफलस्य च ॥
जुहुयादष्टसहस्राणि वैश्वानरेति मन्त्रवित् । सुवर्णं वस्त्रयुग्मं च धेनुं चापि पयस्विनीम् ॥
विप्राय दक्षिणां दद्यात् ततः सम्पद्यते शुभम् ।

अद्भुतचिन्ते—मण्डपस्य भवेच्चूडाभङ्गो देवकुलस्य च ।
दुर्भिक्षावर्षणे तत्र सम्पद्येते न संशयः ॥
हव्याश्च दधिमध्वक्ताः शमीनां समिधोऽयुतम् ।
भूरिमिन्द्रप्रतिमिति मन्त्रेण रूप्यदक्षिणा ॥
तत्रव—दर्वी वा मुसलं चापि स्थूणा वा भिद्यते यदि ।
भिद्यते मूर्धवंशश्च गृहं देवकुलानि च ॥
मासाभ्यन्तरमात्रेण गच्छत्युत्सादनं तु तत् ।
दस्युभिश्च विलुप्यन्ते वर्णा गच्छन्ति संक्षयम् ॥
तत्रैव—मन्दिरे मूर्ध्नि वंशस्य भङ्गे स्वामिवधो भवेत् ।
गृहं त्यक्त्वा समिद्धोमः कार्यो वैकङ्कतस्य च ॥
अष्टोत्तरसहस्रं तु मन्त्रोऽस्मिन् जातवेदसः ।
भोजनं ब्राह्मणायाथ दातव्या गौश्च दक्षिणा ॥
औशनसे—श्रूयते यस्य गेहेषु गीतवादित्रनिःस्वनाः ।
अकस्मान्म्रियते सम्यग्धनं चास्य विलुप्यते ॥
अनाहता दुन्दुभयो वादित्राणि नदन्ति च ।
छत्राणि च गृहे यस्य स तु शीघ्रं विनश्यति ॥
वाराहसंहितायाम्—अङ्गारगैरिकाद्यैर्विकृतप्रेताभिवेशनं यस्मिन् ।
नायकविचित्रमथवा नृपः क्षयं याति न चिरेण ॥
महाशान्त्योऽथ बलयो भोज्यानि सुमहान्ति च ।
कारयीत महेन्द्रं च माहेन्द्रीं च समर्चयेत् ॥
वसन्तराजः—रात्रौ गृहस्योपरि वासमानो दुःखाय शूकः सुतमृत्यवे स्यात् ।
गृहस्थनाशाय च सप्तरात्रं नाशाय राज्ञो द्विगुणान्यहानि ॥
त्र्यहं गृहद्वारि चरत्युलूके हरन्ति चौरा द्रविणान्यवश्यम् ।
तस्मिन् प्रदेशे निशि मांसयुक्तस्तद्दोषनाशाय बलिः प्रदेयः ॥
लिङ्गपुराणे—सूर्योदये प्रत्युपसि प्रत्यक्षं यस्य वै शिवा ।
क्रोशन्त्यभिमुखोऽभ्येति स गतायुर्भवेन्नरः ॥
मार्कण्डेयपुराणे—सूर्योदये शिवा यस्य क्रोशन्ती याति संमुखम् ।
विपरीतरवा घोरा स सद्यो मृत्युमृच्छति ॥
बार्हस्पत्ये—ग्राममध्ये च वा शेते वनादागत्य जम्बुकः ।
तीक्ष्णस्वरेण महता दृष्टो ग्रामवधाय सः ॥
गार्गीये—दिवा गृहं प्रविशति जम्बूको यस्य निर्भयः ।
ध्रुवं गृहपतेस्तत्र विनाशः क्षिप्रमुच्यते ॥
वाराहसंहितायाम्—शिवोदये यत्र दिवाकरस्य भीमं रवं चोर्ध्वमुखी विमुञ्चेत् ।

समागता वायसगृध्रसंघैस्तदाभवं वेदविदो वदन्ति ॥

एतेषामुत्पातानां शान्तिं कुर्य्यात् ।

तथाहि मत्स्यपुराणे—बाणप्रहारा न भवन्ति यद्वद्राजन्नृणां संहननैर्युतानाम् ।
दैवोपघाता न भवन्ति तद्वद्धर्मात्मनां शान्तिपरायणानाम् ॥
ये तु शान्तिं प्रकुर्वन्ति न ते यान्ति पराभवम् ।
नास्तिक्याद्वा विमोहाद्वा विनश्यन्त्येव तेऽचिरात् ॥

तथात्र स्मृतिः—अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः ।
नरापचारान्नियतमुपसर्गः प्रवर्तते ॥
ततोऽपचारान्नियतमपवर्जन्ति देवताः ।
ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान् ॥
त एव त्रिविधा लोके उत्पाता देवनिर्मिताः ।
विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च ॥

योगियाज्ञवल्क्यः—यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या समुदाहृतः ॥
गायत्र्या प्रयतः शुद्धः सर्वपापैः प्रमुच्यते ।
शान्तिकामश्च जुहुयात् गायत्रीमक्षतैः शुचिः ॥
सावित्र्या शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः ।
प्रणवव्याहृतिभ्याञ्च स्वाहान्तो होमकर्मणि ॥

अथ वैष्णवामृते व्यासः—

ग्रहयज्ञैः शान्तिकैश्च किं क्लिश्यन्ति नरा द्विज ।
महाशान्तिकरः श्रीमान् तुलस्या पूजितो हरिः ॥
उत्पातान्दारुणान् पुंसां दुर्निमित्ताननेकशः ।
तुलस्या पूजितो भक्त्या महाशांतिकरो हरिः ॥

अत्र ब्रह्मपुराणीयमन्त्रः—ओं नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहेति ।

अथवा छन्दोगपरिशिष्टे—

अथातः काकगृध्रकङ्कबकश्येनभासचिल्लकपोतानां गृहप्रवेशे मानुषस्योपरि विश्रामणे एषामेव क्रियमाणे गृहद्वारारोहणे वान्येषु चाद्भुतेषु कल्पदृष्टेन विधिनाऽग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति—

ओं अद्भुताय अग्नये स्वाहा, सोमाय विष्णवे रुद्राय वायवे सूर्याय मृत्यवे विश्वेभ्यो देवेभ्यः स्वाहा—इति स्थालीपाकघृतान्यदिति ।

अथ कपोतलक्षणमाह शौनकः—

रक्तपादः कपोताख्यो अरण्यौकाः शुकच्छविः ।
स चेच्छालां विशेच्छालासमीपञ्च व्रजेद्यदि ॥

अन्येषु गृहमध्ये वा वल्मीकस्योद्गमादिषु।

कल्पकेन विधिना गृह्योक्तेन प्रायश्चित्ताज्याहुतीरद्भुतदोषप्रशमार्थाः सप्ताज्याहुतीः—

अद्भुताग्नये स्वाहा—इत्यादिमन्त्रैस्ततस्थालीपाकेतिकर्त्तव्यतया पायसचरुभिरेतेभ्यो देवेभ्यो जुहुयात् तत्रैव पश्चाद्घृतपायसेन ब्राह्मणान्भोजयित्वा गोश्रेष्ठं दक्षिणां दत्त्वा दोषशान्तिर्भवतीति। इति गृहेगृध्रादिपतने विचारः।

अथ शान्तिविधिः—

एतदनेकग्रन्थेभ्य आकृष्य प्राग्दर्शितशान्तिविधिभ्यः सर्वेषां सम्यग्ज्ञानं न भवतीति विविच्य साम्प्रतं स्पष्टीक्रियते। तद्यथा—

चतुर्थीषष्ठीद्वादशीचतुर्दशीतिथिषु शनिमङ्गलवर्जितदिनेषु शान्तिः कर्तव्या।

पूर्वेद्युः एकभुक्तादिकृतसंयमः कृतप्रातःस्नानादिनित्यक्रियः शुक्लाम्बरधरः पीताम्बरधरो वा यजमानो गोमयोदकेनोपलिप्ते पञ्चगव्यगङ्गाजलादिनाऽभिषिक्ते सुलिप्तगृहे प्रविश्य हस्तौ पादौ प्रक्षाल्य, आसन उपविश्य शान्तिं कुर्यात्।

अक्षतमादाय—

ओं भूर्भुवः स्वः सूर्यादिपञ्चदेवता इहागच्छत इह तिष्ठत। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं सूर्यादिपञ्चदेवताभ्यो नमः। एवं पञ्चोपचारैःपूजयेत्

ततस्तिलानादाय—ओं भगवन् विष्णो इहागच्छ इह तिष्ठ। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं भगवते श्रीविष्णवे नमः। एवं चन्दनादिभिः पूजयेत्। ततः कुशत्रयतिलजलान्यादाय—

ओं अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रस्य मम श्री अमुकशर्मणः सपरिवारस्य गृहोपरि गृध्रोलूकाद्युपवेशनरूपोत्पातजन्यदोषझटितिप्रशमनकाम ऋग्वेदान्तर्गतसकलशाखीय "देवाः कपोत इत्यादि प्रतिष्ट इत्यन्त" पञ्चर्चसूक्तस्य चतुर्भिर्ब्राह्मणैः सह ( पञ्चब्राह्मणद्वारा वा ) पञ्चसहस्रसंख्यकजपमहं करिष्ये ( कारयिष्ये वा )। परकारिते पञ्चब्राह्मणान् वृणुयात्। एवं होमे कृते—अद्येत्यादि पञ्चर्चसूक्तस्वाहान्तेन चतुर्भिर्ब्राह्मणैस्सह ( पञ्चब्राह्मणद्वारा वा ) दधिमधुघृताक्ततिलैर्होममहं करिष्ये ( कारयिष्ये वा ) इति सङ्कल्प्य ऐशान्यां घटं संस्थाप्य जलेन परिपूर्य्य तन्मध्ये—

श्यामाकञ्च शमीचैव वल्मीकस्य च मृत्तिका।
श्वेतसर्षपसंयुक्ता दूर्वामुस्तादयो द्विज॥
अश्वत्थत्वक् समायुक्तं वटं वैकंकतं तथा।
श्यामालतां सुवर्णञ्च प्रियङ्गुं चार्कमेव च॥

एता औषधीर्दत्त्वा शान्त्यर्थं—

ततोऽक्षतमादाय—ओं भूर्भुवः स्वर्गणेश इहागच्छ इह तिष्ठ। एतानि पाद्या-

र्घाचनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्गणेशाय नमः । एवं चन्दना-दिभिः पूजयेत् ।

ततोऽक्षतमादाय—ओं भूर्भुवः स्वर्लक्ष्मि इहागच्छ इह तिष्ठ । एतानि पाद्या-र्घाचमनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्लक्ष्म्यै नमः । एवं चन्दना-दिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्धरित्रि इहागच्छ इह तिष्ठ, एतानि पाद्यार्घाचमनीयस्नानीय-पुनराचमनीयानि ओं भूर्भुवः स्वर्धरित्र्यै नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्वास्तुपुरुष इहागच्छ इह तिष्ठ । एतानि पाद्यार्घाचमनीयस्ना-नीयपुनराचमनीयानि ओं भूर्भुवः स्वर्वास्तुपुरुषाय नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्दशदिक्पाला इहागच्छत इह तिष्ठत । एतानि पाद्यार्घाच-मनीयस्नानीयपुनराचमनीयानि ओं भूर्भुवः स्वर्दशदिक्पालेभ्यो नमः । एवं चन्दनादिभिः पूजयेत् ।

ओं भूर्भुवः स्वर्नवग्रहा इहागच्छत इह तिष्ठत । एतानि पाद्यार्घाचमनीयस्ना-नीयपुनराचमनीयानि ओं भूर्भुवः स्वर्नवग्रहेभ्यो नमः । एवं चन्दनादिभिः पूजयेत् ।

ततः प्रथमं शालग्रामोपरि वरुणं यथासम्भवोपचारैः संपूज्य करिष्यमाणहोमीय-मन्त्रमष्टोत्तरशतं जपित्वा विल्वपत्रेण तेनैव मन्त्रेण शतवारं हुत्वा, आत्मरक्षां कृत्वा गायत्रीञ्चाष्टोत्तरशतं जपित्वा आत्मनः शुद्धिं विधाय सस्रुवर्णहस्तेन—

ओं इदं विष्णुर्विचक्रम इति मन्त्रं सहस्रशीर्षा........इति मन्त्रं च पौष्टिक-शान्त्यर्थमष्टोत्तरशतं जपित्वा समर्पयेत् ।

ततो मुख्यमन्त्रा यथा—अस्य श्रीदेवाः कपोत इत्यादि—पञ्चर्चसूक्तस्य निर्ऋतिपुत्र ऋषिस्त्रिष्टुप् छन्दो विश्वेदेवा देवता गृध्रकपोतादिवैकृतिशान्त्यर्थे जपे विनियोगः ।

ओं देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम । तस्मा अर्चाम-कृण वामनिष्कृतिं शन्नो अस्तु द्विपदे शञ्चतुष्पदे ।

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु । अग्निर्हि विप्रो जुषत हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ।

हेतिः पक्षिणीनदभात्यस्मानाष्ट्र्यां पदं कृणुनुते अग्निधाने । शन्नोगोभ्यश्च पुरुषे-भ्यश्चास्तु मानोहिंसीदिह देवाः कपोतः ।

यदुलूको वदति मोघमेतद्यत्कपोतः यदग्नौ कृणोति । यस्य दूतः प्रहित एष एत-त्तस्मै यमाय नमो अस्तु मृत्यवे ।

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परिगान्नयध्वम् । संयापयन्तो दुरितानि विश्वा हित्वा न ऊर्ज्जं प्रपातात्पतिष्ठः ।

इति पञ्चर्चसूक्तं जपित्वा समर्प्य, ततः पञ्चसहस्रं पञ्चभिर्ब्राह्मणैर्होतव्यम् । तद्यथा

कुशैर्हस्तमात्रपरिमितचतुरस्रां भूमिं परिसमुह्य तान् कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेन स्फ्येन वा प्रादेशमात्रं त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य कांस्यपात्रेणाग्निमादाय स्वाभिमुखं तत्र निदध्यात्। ब्रह्मणोऽभावे—

ओं अद्य कर्तव्यगृध्रादिपतनशान्तिहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुमिमम् कुशं त्वमस्मे ब्रह्मा भव इत्यभिधाय आसने पञ्चाशत्कुशात्मकं ब्रह्माणमुपवेशयेत्।

ब्रह्मणः सत्त्वे पूर्ववत् क्रिया कार्या।

ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात्। ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्यन्तं नैर्ऋत्याद्वायव्यान्तमग्नितः प्रणीतापर्यन्तम्।

ततः पवित्रच्छेदनार्थं कुशपत्रत्रयं, पवित्रकरणार्थं साग्रमनन्तर्गर्भि कुशपत्रद्वयं, प्रोक्षणीपात्रं, आज्यस्थाली, सम्मार्जनकुशाः, वेणीरूपोपयमनकुशाः, समिधस्तिस्रः, स्रुवः, आज्यं, तिलाः, अर्कादिसमिधः, ब्रह्मदक्षिणार्थं पूर्णपात्रं, एवं होमोपयोगिवस्तून्यग्नेरुत्तरभागे पवित्रच्छेदनकुशानां पूर्वं-पूर्वं-दिशि क्रमेणासादयेत्। ततः पवित्रच्छेदनकुशैः स्वप्रादेशमितपवित्रे छित्वा सपवित्रकरेण प्रणीतापात्रस्थजलं त्रिः प्रोक्षणीपात्रे कृत्वा द्वाभ्यामनामिकाङ्गुष्ठाभ्यां गृहीतोत्तराग्रपवित्राभ्यां त्रिरुत्पवनं कृत्वा, प्रोक्षणीपात्रं वामकरे धृत्वा सपवित्राभ्यां दक्षिणकरानामिकाङ्गुष्ठाभ्यां तज्जलं किञ्चिदूर्ध्वं प्रक्षिप्य प्रणीताजलेन प्रोक्षणीं सिक्त्वा तज्जलेनासादितवस्तुसेचनं कुर्यात्। अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं स्थापयित्वा आज्यस्थाल्यामाज्यन्निधायाग्नेरुपरि धृत्वा ज्वलत्तृणं तस्योपरि भ्रामयित्वा तृणमग्नौ क्षिपेत्। ततः स्रुवं त्रिः प्रतप्य सम्मार्जनकुशानामग्रैरनन्तरतो मूलैर्बाह्यतः स्रुवं सम्मृज्य प्रणीताजलेन सिक्त्वा पुनस्तं त्रिः प्रतप्य स्वदक्षिणतः कुशोपरि निदध्यात्। ततोऽग्नित आज्यमवतार्य स्वाग्रे धृत्वा प्रोक्षणीवत् त्रिरुत्पूय अवेक्ष्य सत्यपद्रव्ये तन्निरसनम्, पुनः प्रोक्षण्युत्पवनम्। उपयमनकुशान् वामहस्ते कृत्वा प्रजापतिम्मनसा ध्यात्वा घृताक्ताः समिधः तूष्णीमग्नौ क्रमेण क्षिपेत्। ततः प्रोक्षणीपात्रस्थजलेन प्रदक्षिणक्रमेणाग्नेः पर्युक्षणं कुर्यात्। प्रणीतापात्रे पवित्रे निधाय पातितवामजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात्, तत्राघाराज्यभागेष्वाहुतिचतुष्टयेषु स्रुवावस्थितहुतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः। यथा—

ओं प्रजापतये स्वाहा इदं प्रजापतये, इति मनसा। ओं इन्द्राय स्वाहा इदमिन्द्राय, इत्याघारौ। ओं अग्नये स्वाहा इदमग्नये, ओं सोमाय स्वाहा इदं सोमाय, इत्याज्यभागौ। एवमाज्यभागान्तं कृत्वा वह्निं सम्पूज्य यजमानेन होमीयद्रव्याणि देवताभ्यो मया दत्तानीति मनसा त्यक्ते, अन्वारम्भं विना संस्रवधारणं च विना

दधिमधुघृताक्ततिलैः उक्तपञ्चर्चसूक्तेन स्वाहान्तेन पञ्चसहस्रं पञ्चशताहुतीर्वा हुत्वा, ततो होता ब्राह्मणान्वारब्धसंस्रवधारणपूर्वकमाज्यतिलाभ्याम्—

ओं अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । तत आज्यं स्रुवेण जुहुयात् ।

ओं भूः स्वाहा इदं भूः, ओं भुवः स्वाहा इदं भुवः, ओं स्वः स्वाहा इदं स्वः ।

अथ प्रायश्चित्तहोमः—

ओं त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठोवह्नितमः शोशुचानो विश्वाद्वेषाᳬंसि प्रमुमुग्ध्यस्मत्स्वाहा, इदमग्नीवरुणाभ्याम् ।

ओं स त्वन्नो अग्नेऽवमोभवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्वनोवरुणᳬ रराणोवीहिमृडीकᳬ सुहोवन एधि स्वाहा, इदमग्नीवरुणाभ्याम् ।

ओं अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वमया असि । अयानो यज्ञंवहास्ययानोधेहि भेषजᳬ स्वाहा, इदमग्नये ।

ओं येतेशतंवरुणये सहस्रं यज्ञियाः पाशावितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ।

ओं उदुत्तमंवरुणपाशमस्मदवाधमं विमध्यमᳬश्रथाय । अथावयमादित्यव्रते तवनागसो अदितये स्याम स्वाहा, इदं वरुणाय ।

ओं प्रजापतये स्वाहा इद प्रजापतये, इति मनसा । ततः संस्रवप्राशनं कृत्वा आचम्य कुशादिकमादाय—

ओं अद्य कृतैतच्छान्तिकर्माङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं सम्प्रददे, इति ब्रह्मदक्षिणां पुरोहिताय दद्यात् । ब्रह्मणः सर्वे तस्मायेवेति । ततः कुशात्मकंब्रह्माणमग्निप्रदक्षिणक्रमेणोत्थापयेत् । ततः ओं सुमित्रियान आप ओषधयस्सन्तु, इति पवित्राभ्यां प्रणीताजलेन शिरः सम्मृज्य ओं दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः, इत्यैशान्यां प्रणीतां न्युब्जीकुर्य्यात् ।

ततस्तरणक्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य्य हस्तेनैव जुहुयात् ।

ओं देवागातुविदो गातुं वित्त्वागातुमित मनसस्पत इमन्देव यज्ञᳬ स्वाहा वातेधाः स्वाहा, ततः—

ओं मूर्द्धानन्दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । कविᳬ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा, अनेन मन्त्रेण फलपुष्पसमन्वितघृतपूर्णस्रुवेणोत्थाय पूर्णाहुतिन्दद्यात् । तत उपविश्य स्रुवेण भस्मानीय त्र्यायुषं कुर्य्यात् । तद्यथा—ओं त्र्यायुषंजमदग्नेः इति ललाटे, ओं कश्यपस्य त्र्यायुषम्, इति ग्रीवायाम्, ओं यद्देवेषु त्र्यायुषम् इति दक्षिणबाहुमूले, ओं तन्नोऽस्तु त्र्यायुषम् इति हृदि ।

ततो विसर्जनम्—ओं भूर्भुवः स्वः सूर्यादिपञ्चदेवताः पूजिताः स्थ क्षमध्वम्।
ओं भूर्भुवः स्वः भगवन् श्रीविष्णो पूजितोऽसि प्रसीद।
ओं भूर्भुवः स्वर्गणेश पूजितोऽसि प्रसीद।
ओं भूर्भुवः स्वर्लक्ष्मि मयि रमस्व।
ओं भूर्भुवः स्वर्धरित्रि पूजिताऽसि प्रसीद।
ओं भूर्भुवः स्वर्वास्तुपुरुष पूजितोऽसि प्रसीद।
ओं भूर्भुवः स्वर्दशदिक्पालाः पूजिताः स्थ क्षमध्वम्।
ओं भूर्भुवः स्वर्नवग्रहाः पूजिताः स्थ क्षमध्वम्।
इति पृथक् पृथक् पूजितदेवान् विसर्जयेत्।
अथवा—ओं यान्तु देवगणाः सर्वे पूजामादाय याज्ञिकीम्।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च॥ इत्यनेन समष्टयैव विसर्जयेत्।

ततो यजमानः कुशादिकमादाय—

ओं अद्य कृतैतच्छान्तिकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूलकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय होत्रे दक्षिणामहन्ददे इति उत्सृज्य होतृभ्यो दद्यैवं जापकेभ्यश्च दद्यात्। वरणपूर्वकं होतृभ्यो जापकेभ्यो नामगोत्रोच्चारणपुरस्सरमित्यूहः। स्वयं कृतश्चेत्तदा पुरोहिताय दद्यात्। यदि यजमानः स्वयं कर्तुमक्षमस्तदा सङ्कल्पवाक्ये पञ्चब्राह्मणद्वारेत्यूहः कार्यः। अत्र श्रृगालकृतोत्पातेष्वत्रानुक्तविशेषशान्तिषु सावित्रीमन्त्रकलशहोमादिका शान्तिर्मृगपक्षिविकारविहिता वा शान्तिरौत्पातिकफलगुरुलाघवमवगम्य कर्तव्या। अथवा नारदोक्तशान्तिः कर्तव्या। तद्यथा—

दधिमधुसमायुक्तं सिद्धार्थं घृतमिश्रितम्। चरुं वै वैश्वदैवत्यं कृत्वा चैवं विधानतः॥
जुहुयात्पञ्चसाहस्रं जातवेदसि मन्त्रवित्। धेनुञ्च दक्षिणां दद्यात् सुवर्णं धान्यमेव च।
अस्मिन्नाशु कृते शान्तिः शुभं ग्रामस्य वै भवेत्।

अथ श्रृगालोत्पातशान्तिः—

पूर्वोक्तसङ्कल्पे श्रृगालकृतोत्पातजन्यदोषस्य झटितिप्रशमन इत्यूहः। पूर्ववदग्निं संस्थाप्य दधिमधुघृताक्तसर्षपेण चरुणा वैश्वदैवत्येन (ओं जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदतिदुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः।)

अस्य कश्यपऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता श्रृगालोत्पातशान्त्यर्थे दधिमधुघृताक्तसिद्धार्थचरुणा होमे विनियोगः। इति मन्त्रेण पञ्चसहस्रसंख्यकहवनं कृत्वा धेनुं सुवर्णं धान्यञ्च दक्षिणान्दद्यात्। धेनोरभावे पञ्चकार्षापणं, सुवर्णधान्ययोरभावे-एकादशमुद्रान्दद्यात्। इति गृहे गृध्रादिपतनशान्तिपद्धतिस्तृतीया॥

समाप्तश्चायं ग्रन्थः।

---

# अथ समाहितम् ।

आसीद्विदेहविषयेऽखिललोकदक्षः श्रीकश्यपान्वयभवोऽतिविशुद्धकर्मा ।
झोपाह्व "देवन" इति प्रथितो हि नाम्ना भूमौ समैर्नरवरैरनिशं सुपूज्यः ॥ १ ॥
पुत्रेष्वनेकविधकौशलगुम्फितेषु पुत्रास्त्रयस्तदभवन्सुतरां सुयोग्याः ।
तेष्वग्रजस्य कुशलस्य "भवी"ति संज्ञा तस्यानुजस्य विदुषो हि "रुद्रे"ति संज्ञा ॥२॥
तत्रानुजो निखिललोकनितान्तशान्तो धीरोऽतिरूपगुणवान् बहुकीर्तिकान्तः ।
स्वच्छाशयो द्विजवरो "जयदत्त" संज्ञः सर्वप्रवन्दितपदो ह्यसिदानविज्ञः ॥ ३ ॥
तस्याभवत्सुतकदम्बकसर्वयोग्यः, वैज्ञानिकः सुहृदयः सरलो वदान्यः ।
विद्यातपोविनयकीर्त्यतुलोऽचलायामस्मत्पितामहपिता किल "मातृनाथः" ॥ ४ ॥
जातो विशुद्धगुणवर्य्यपितामहो मे स्वच्छाशयो गिरिशपादविलीनचेताः ।
वित्तः कृती नयनशास्त्रविधौ नितान्तं "गोस्वामि" संज्ञ इह शान्तगुणैकमूर्त्तिः ॥५॥
योऽम्बां निभाल्य सुरमन्दिर आगतस्वमाशां विहाय जनकस्य सुवासभूमिम् ।
"ठाढी" समाख्यनगरीं मिथिलाप्रसिद्धामम्बाकुलं वसुयुतं हि समाश्रितोऽभूत् ॥६॥
ख्याते सुरम्यनगरे किल "चौगामा" ख्ये झोपाह्वयेन धनधर्मसमन्वितेन ।
"गूना" ख्यया जगति सुप्रथितेन चायं मातामहेन सुतवत्परिपालितोऽभूत् ॥ ७ ॥
तेनैव नैजपुटभेदनसन्निधाने ख्यातेऽतिरम्यनगरे "जरिसो"ऽभिधाने ।
पुत्र्या सुधीधनयशोबलसंयुतस्य प्रोद्वाहितो ह्ययमुदारगुणान्वितस्य ॥ ८ ॥
कालं कियन्तमथ मातृकुले निनाय स्नेहात्ततः श्वशुर (वेदमणिझा)मन्दिरमागतोऽसौ ।
लब्ध्वा धनं च बहुमानपुरःसरेण तत्रैव नैजवसतिं कृतवान् मनीषी ॥ ९ ॥
तस्याभवन्निखिललोकहितैकदक्षाः पुत्रा विवेकनिपुणा ह्यन्तिशान्तकान्ताः ।
पञ्चानवद्यगुणसंवलितास्त्वमीषु सर्वानुजो मम पिता "बलदेव" नामा ॥ १० ॥
भूमौ सुरेज्य इव सर्वनगैः प्रतीक्ष्यः शान्तः सदा सकलदैवविदग्रगण्यः ।
कारुण्यपूतहृदयः परिपन्थिहीनो ह्यामर्षलोभरहितोऽतिविनीतवेषः ॥ ११ ॥
तत्तनया विविधधियः सप्तमिता लोकलोचनानन्दाः ।
ज्येष्ठस्तेषु सुहृदयः श्रीमान् "रघुवंश" नामास्ति ॥ १२ ॥
सर्वं गृहभारं वै दत्वाऽमुष्मै पिता गतः स्वर्गम् ।
वसुपञ्चनागचन्द्रे ( १८५८ ) शाकेऽङ्कतिथौ नभःशुचौ चन्द्रे ॥ १३ ॥
तस्यानुजोऽल्पधिषणो ह्यय "मच्युतादिनन्दो" ऽस्म्यहं मदनुजो "भुवनेश्वरो"ऽस्ति ।
तस्यानुजो दिवमितः किल बाल्यकाले तस्यानुजो "हरिहरः" किल लोकदक्षः ॥१४॥
तस्यानुजोऽतिधिषणश्च "शिवादिनन्दो" लग्नः सदा शिवपदाब्जयुगेऽतिभक्त्या ।
तस्यानुजोऽतिचतुरोऽतिमनोज्ञ "कीर्त्या-नन्दो" नितान्तकुशलः सुगुणाभिरामः ॥१५॥

इति समाहितम् ॥

---

## वास्तुरत्नावली-सुबोधिनी टीका

### सोदाहरण-सुबोधिनी संस्कृत हिन्दी टीकाद्वय सहिता।

यह संस्करण परीक्षार्थी विद्यार्थियों के लाभ के हेतु सरल संस्कृत हिन्दी टीका तथा उदाहरणों से सुशोभित कर प्रकाशित किया गया है। मेरा दृढ़ विश्वास है कि इस टीका को एकवार भी अवलोकन करने से विद्यार्थी परीक्षा में उत्तम रूप से सफलता प्राप्त कर सकते हैं २॥)

## जन्मपत्रदीपकः

### सोदाहरण सटिप्पण-हिन्दीटीकासहितः।

इस छोटी सी पुस्तक में जन्मपत्र बनानेकी कुछ विधियां ऐसी सरलता पूर्वक नये ढङ्ग से लिखी गई हैं कि साधारण पढ़ा लिखा व्यक्ति भी इस का आद्योपान्त मनन करके अच्छी से अच्छी कुण्डली (जन्मपत्रिका) बना सकता है। सर्व साधारण को गूढ़ विषयों का सुलभता पूर्वक झटिति परिज्ञान होजाने के लिये अत्यन्त सरल सुबोध हिन्दीभाषा में टीका और उदाहरण एवं जगह २ पर आवश्यक टिप्पणी भी कर दी गई है। अभिनव परिवर्द्धित द्वितीय संस्करण १)

### पञ्चाङ्गोपयोगी ज्ञान के लिए

## पञ्चाङ्गविज्ञानम्

### संपादक—पं० मुरलीधरठक्कुर ज्यो० आ० ज्यो० तीर्थ

यह ग्रन्थ **होडाचक्र** तथा और भी अन्य पञ्चाङ्गोपयोगी ग्रन्थों के आधार पर विद्यार्थियों तथा जन साधारण के लाभ के हेतु **सरल हिन्दी टीका** तथा **उदाहरणों** से सुशोभित कर प्रकाशित किया गया है। जन साधारण इस एक ही पुस्तक से पञ्चाङ्ग सम्बन्धी सभी बातें ज्ञात कर सकते हैं। ।=)

## बृहत्—होडाचक्रविवरणम्

### सम्पादक—ज्यौतिषाचार्य-पण्डित श्री मुरलीधरठक्कुरः

इसमें लोकोपयुक्त मौहूर्तिकसंग्रह को एकत्र करके उन सब श्लोकों की हिन्दी टीका भी छाप दी गई है। व्यवहार में तथा परीक्षा में जितने भी विषय आ सकते हैं, कोई भी विषय छूटने नहीं पाये हैं। शतपथचक्र, नक्षत्रचक्र, राशिचक्र, वरवधू मेलापकचक्र, घातकचक्र, लग्न बनाने की विधि आदि १० चक्र भी दिये गये हैं ॥)

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस—१